॥ श्री ॥

वरवरमुनि-

# दि न च र्या.

---

श्रीदेवराजगुरुविरचिता.

---

श्रीवीरराघवसूरिविरचितया

सदाचारदीपिकाख्यया व्याख्यया समेता.

---

श्रीयादवाद्रिनिवासरसिकेन

प-भ तो नरसिंहार्येण

---

कल्याणपुरनाम्नि बेंगळूरुनगरे

विचारदर्पणमुद्राक्षरशालाया प्रकाशिता.

---

१९०९.

---



---

**Price 8 As**

॥ श्रीः ॥

श्रीमते रामानुजाय नमः

# उपोद्घात

---

अस्य दिनचर्याख्यग्रन्थस्य कर्ता श्रीमद्विशिष्टाद्वैतसिद्धान्त निष्ठागरिष्ठो वरवरमुनिदासापरनामधेयो विद्वदग्रेसरो देवराजगुरु। अस्य चावतारस्थलमुत्तरश्रीरङ्गाभिधेय घटिकाचलसमीपस्थ 'एरुम्बि' क्षेत्रम् । अत एव चास्य गुरो 'एरुम्बियप्पा' इति द्राविडनामधेय मासीत् ॥ सोऽयमापस्तम्बसूत्रानुयायी श्रीवत्सगोत्रोद्भवस्सर्वलोकशर ण्याचार्यवर्यस्य पुत्र । स्वयमतिप्रगल्भोऽप्ययमाचार्यपुत्र श्रीमद्वर-वरमुनेरन्तरङ्गशिष्यतां क्रमेण सम्प्राप्तो गरिष्ठां स्वकीयाचार्यनिष्ठामनेक ग्रन्थरूपेण सुविशद प्राचीकशन् । श्रीमद्वरवरमुनिसमयस्तु १२९२ (नन्दाराये) शालिवाहशकवर्षादारभ्य १३६९ (मितोगोप) शकवर्ष पर्यन्तमासीदिति पूर्वाचार्यग्रन्थेषु दरीदृश्यते । अतो देवराजगुरुरपि नयो दशशतकान्त्यभागे वा चतुर्दशशतकादिभागे वा समुत्पन्न इति निश्चेतु शक्यते । अस्य च महागुरोश्चरित्र श्रीमद्यतीन्द्रप्रवणप्रभावनाम्नि मणिप्रवाळप्रबन्धे सुस्पष्टम् । एतत्कर्तृका ग्रन्थास्तु—(1) वरवरमुनि-दिनचर्या (2) वरवरमुनिशतकम् (3) वरवरमुनिकाव्यम् (4) वरवर मुनिचम्पू (5) वरवरमुनिमङ्गळाशासनम् (6) वरवरमुन्यार्तिप्रबन्ध (7) सन्मार्गदर्पणम् (8,9) श्रीश्रिय पतिमङ्गळाशासने (10) स्तोत्राणि (11) वरदराजमङ्गळाशासनम् (12) ऋद्धिस्तव (13) श्रीमन्नारा यणमङ्गळाशासनम् (14) श्रीभाष्यकारमङ्गळाशासनम् (15) रामानु जाष्टकम् (16) लोकार्यविंशति (17) लक्ष्मीपरिणयनाटकम्— इत्यादयो बहव श्रूयन्ते

अत्र मुद्रिते च दिनचर्याख्यप्रबन्धे त्रयो विभागा दृश्यन्ते— *(1) पूर्वदिनचर्या (2) यतिराजविंशति (3) उत्तरदिनचर्या—चेति॥*

श्रीः

अत्र व्याख्योदाहृतग्रन्था ग्रन्थकर्तारश्च.

यथाऽनुजीवी नृपतिं यथा भक्तश्च दैवतम् ॥ तथैव देशिकं शिष्यस्सेवेत विनयान्वित. । दास्याभिमानोऽनुव्रज्या श्रवणं कीर्तनं स्मृतिः ॥"—इत्यादिविशिष्टाधिकारिविषयविशिष्टशास्त्रदर्शनेन निरवधिकगुरुभक्तिभूम्रा च स्वाचार्यं भगवन्तं वरवरमुनिमधिकृत्य शतककाव्यचम्पुप्रमुखप्रबन्धाभिबन्धनस्यपर्यवसितप्रीतिः 'गुरोर्वार्ताश्च कथयेत्' इति विध्युत्तम्भिताभिनिवेशस्तमेवाधिकृत्य दिनचर्याख्यप्रबन्धं आरभमाणश्चिकीर्षितस्य निर्विघ्नपरिसमाप्त्यर्थं स्वाधिकारानुरूपं गुरुनमस्क्रियारूप मङ्गलमाचरति—अङ्क इत्यादिना ॥

इयं हि दिनचर्या पङ्क्तिपावनं भगवन्तं वरवरमुनिमधिकृत्य प्रवृत्ता स्वयमपि पङ्क्तिपावनी सकलैरपि निष्कृष्टसत्त्वनिष्ठैर्वैदिकवरिष्ठैः पङ्क्तिशोऽनुयागानुष्ठानारम्भेष्वनुसन्धीयत इति सम्प्रदायः ॥

अङ्क इत्यादि ॥ तुङ्गे निरतिशये, इदं भुवनमङ्गलविशेषणम्; भुवनानां भूलोकादीनां, मङ्गले मङ्गलसाधने; अगर्हितेष्टार्थसिद्धिर्मङ्गलम्, अत्र हेतुहेतुमतोरैक्याद्धेत्वलङ्कारविशेष'। मङ्गले स्वयं प्राप्ये वा; मङ्गेरलच्, मगि समर्पण इत्यतो मङ्गलशब्दो निष्पन्नः। इदं च पूर्वोत्तराभ्यामन्वेति। कवेरकन्यायाः कावेर्याः, अङ्के उत्सङ्गे; रङ्गे धाम्नि—'यस्माद्रङ्गि गतो विष्णु.' इत्युक्तरीत्या भगवदत्यन्ताभिमतस्थानविशेषे; सुखासीनं—सुखेन वसन्तं; वरवरं मुनिं—रूपौदार्यादिभिश्श्रीरङ्गराजेन सौसादृश्यात्तदाख्यधरं तत्त्वयाथात्म्यमननशीलं; वन्दे—नमामि स्तौमि च; वदि अभिवादनस्तुत्योरिति हि धातुपाठः। एवं हि करणत्रयेणापि मङ्गलमनुष्ठितं भवति। कवेरकन्यायाः अङ्के रङ्गे धाम्नि सुखासीनमित्यनेन वत्सलतरस्वमातामणुत्सङ्गसुखनिषण्णशिशुसमाधिः स्फोर्यते। अत्र 'दुग्धाब्धिर्जनको जनन्यहमियं श्रीरेव पुत्रीवरदश्रीरङ्गेश्वरः' इत्यादिकं द्रष्टव्यम्। सुखासीनमित्यत्र च—एतदवतारानन्तरं

मयि प्रविशति श्रीमन्मन्दिरं रङ्गशायिन ।
पत्यु. पदाम्बुज द्रष्टुमायान्तमविदूरत ॥ २ ॥

श्रीरङ्गविहृतो नाम्नीति प्रसिद्धिस्सूचिता; अङ्क इत्यकारेण उपक्रमा-त्तस्य च भगवदभिधानत्वात्। "देवतावाचकाश्शब्दा ये च स्युर्भ-द्रवाचकाः। ते सर्वेनेन निन्द्यास्स्युर्लिपितो गणतोऽपि वा ॥"—इत्येतदत्रानुसन्धेयम् ॥ १ ॥

अथ स्वाचार्येण स्वविषयीकारप्रकारमनुसन्दधान —"तद्वचश्श्रवणो-त्सुकः। विग्रहालोकनपर श्रवण कीर्तन स्मृति ॥"—इति भरद्वाजोक्तप्र-कारेण स्वाचार्यवचश्श्रवणादीनां फलरूपता भवतु सप्रतिभटता च वदन् 'प्रत्यक्षे गुरव स्तुत्या' इत्याद्युक्तरीत्या प्रत्यक्षतो गुरु स्तुवन्नर्थाचि-कीर्षितमर्थं सगृह्णाति—मयिप्रविशतीत्यादिना अनारतमित्य-न्तेन ॥ श्रीमन्निति सम्बुध्यन्तं, श्रीमदिति मन्दिरविशेषण वा; श्रीरिह स्वरूपानुरूपकैङ्कर्यसम्पत्, तदतिशयश्च मतुवर्थ ; आद्ये कर्तृत्वेनान्त्ये अधिकरणत्वेन च तद्वत्त्वं द्रष्टव्यम्; रङ्गशायिन- मन्दिरं मयि प्रवि-शति सति—पूर्वं वैमुख्यहेतुदुरितदूषिते मयि अनुकल्पभूतमुरभित्पाद-लिप्सामात्रेण प्रविशति सति । पत्यु'—पति विश्वस्येत्युक्तसर्वशेषिण', पदाम्बुज द्रष्टु रङ्गशायिनो मन्दिरमविदूरतस्समीपे आयान्त; अस्य च त्वामित्यनेनान्वय । मयि प्रविशति आयान्तमित्यनेन तदेतत्काक-तालीयमिति न्यायस्सूचित ; अविदूरत इत्यनेन च—'तद्दृष्टिगोचरास्सर्वे मुच्यन्ते सर्वकिल्बिषै ।' इत्युक्तप्रकारेण तत्सन्निधिप्रभावाद्वैमुख्यहेतु-दुरित नष्टमिति स्फोर्यते । पत्यु पदाम्बुजमित्यनेन तु—"देवतान्तर-शाठ्यादिभक्तिदृष्णाग्र्यहेतुषु । साम्यरूत्वपरमैकान्तो हरौ स्वामीति बुद्धिमान् ॥"—इत्युक्तपारमैकान्त्यविशेषो यतीन्द्रप्रवणस्य ध्वन्यते ।

॥ श्रीः ॥

श्रीमते रामानुजाय नमः ॥

# दिनचर्या सव्याख्या.

सौम्यजामातृयोगीन्द्रचरणाम्बुजषट्पदम् ।
देवराजगुरुं वन्दे दिव्यज्ञानप्रदं शुभम् ॥

## पूर्वदिनचर्या

अङ्के कवेरकन्यायास्तुङ्गे भुवनमङ्गले ।
रङ्गे धाम्नि सुखासीनं वन्दे वरवरं मुनिम् ॥ १ ॥

---

## व्याख्या

सेवेऽहं भक्तिसाराख्यं सौदर्शनमहं महः ।
ययौ जङ्गमतां येन वेगासेतुर्विभावितः ॥
दिनचर्या व्याकरोति देवराजार्यनिर्मिताम् ।
वरदार्यदयानिघ्नो वाधूलो वीरराघवः ॥

तत्रभवान् वरवरमुनिदासापरनामधेयो देवराजगुरुः—"गुरोर्नाम सदा जपेत् । तद्दर्शनश्च वर्तेत साक्षान्नारायणो हि सः । कुर्वीत परमां भक्तिं गुरौ तत्प्रियवत्सलः ॥ तदरिष्टावसादी च तन्नामगुणहर्षितः ।

यथाऽनुजीवी नृपतिं यथा भक्तश्च दैवतम् ॥ तथैव देशिकं शिष्यस्सेवेत विनयान्वितः। दास्याभिमानोऽनुव्रज्या श्रवणं कीर्तनं स्मृतिः ॥"— इत्यादिविशिष्टाधिकारिविषयविशिष्टशास्त्रदर्शनेन निरवधिकगुरुभक्तिभूम्ना च स्वाचार्यं भगवन्तं वरवरमुनिमधिकृत्य शतककाव्यचम्पुप्रमुखप्रबन्धान्निबध्नन्नप्यपर्यवसितप्रीतिः 'गुरोर्वार्ताश्च कथयेत्' इति विध्युत्तम्भिताभिनिवेशस्तमेवाधिकृत्य दिनचर्याख्यप्रबन्धं प्रारभमाणश्चिकीर्षितस्य निर्विघ्नपरिसमाप्त्यर्थं स्वाधिकारानुरूपं गुरुनमस्क्रियारूपं मङ्गलमाचरति—अङ्क इत्यादिना ॥

इयं हि दिनचर्या पङ्क्तिपावनं भगवन्तं वरवरमुनिमधिकृत्य प्रवृत्ता स्वयमपि पङ्क्तिपावनी सकलैरपि निष्कृष्टसत्त्वनिष्ठैर्वैदिकवरिष्ठैः पङ्क्तिशोऽनुयागानुष्ठानारम्भेष्वनुसन्धीयत इति सम्प्रदायः ॥

अङ्क इत्यादि ॥ तुङ्गे निरतिशये, इदं भुवनमङ्गलविशेषणम्; भुवनानां भूलोकादीनां, मङ्गले मङ्गलसाधने; अगर्हितेष्टार्थसिद्धिर्मङ्गलम्, अत्र हेतुहेतुमतोरैक्याद्धेत्वलङ्कारविशेषः। मङ्गले स्वयं प्राप्ये वा; मङ्गेरलन्, मगि समर्पण इत्यतो मङ्गलशब्दो निष्पन्नः। इदं च पूर्वोत्तराभ्यामन्वेति। कवेरकन्यायाः कावेर्याः, अङ्के उत्सङ्गे; रङ्गे धाम्नि— 'यस्माद्रङ्गं गतो विष्णुः' इत्युक्तरीत्या भगवदत्यन्ताभिमतस्थानविशेषे; सुखासीनं—सुखेन वसन्तं; वरवरं मुनिं—रूपौदार्यादिभिश्श्रीरङ्गरामेन सौसादृश्यात्तन्नामधेयधरं तत्त्वयाथात्म्यमननशीलं; वन्दे—नमामि स्तौमि च; वदि अभिवादनस्तुत्योरिति हि धातुपाठः। एवं हि करणत्रयेणापि मङ्गलमनुष्ठितं भवति। कवेरकन्यायाः अङ्के रङ्गे धाम्नि सुखासीनमित्यनेन वत्सलतरस्वमातामधुत्सङ्गसुखनिषण्णशिशुसमाधिः स्फोर्यते। अत्र 'दुग्धाब्धिर्जनको जनन्यहमियं श्रीरेव पुत्रीवरदश्रीरङ्गेश्वरः' इत्यादिकं द्रष्टव्यम्। सुखासीनमित्यत्र च—ऐन्द्रवतारानन्तरं

मयि प्रविशति श्रीमन्मन्दिरं रङ्गशायिनः ।
पत्युः पदाम्बुजं द्रष्टुमायान्तमविदूरतः ॥ २ ॥

श्रीरङ्गविभवो नास्तीति प्रसिद्धिस्सूचिता, अङ्क इत्यकारेण उपक्रमा त्तस्य च भगवदभिधानत्वात्। "देवतावाचकाश्शब्दा ये च स्युर्मङ्गलावहाः। ते सर्वेऽत्र निन्द्यास्स्युर्लिपितो गणतोऽपि वा॥"— इत्येतदत्रानुसन्धेयम्॥ १॥

अथ स्वाचार्येण स्वविषयीकारप्रकारमनुसन्दधानः—"तद्वचश्श्रवणोत्सुकः। विग्रहालोकनपरः श्रवणं कीर्तनं स्मृतिः॥"—इति भरद्वाजोक्तप्रकारेण स्वाचार्यवचःश्रवणादीनां फलरूपतां भवतु स्वप्रतिभटतां च वदन् 'प्रत्यक्षे गुरवः स्तुत्याः' इत्याद्युक्तरीत्या प्रत्यक्षतो गुरुं स्तुवन्नर्थाचिकीर्षितग्रन्थार्थं संगृह्णाति—**मयिप्रविशतीत्यादिना अनारतदामित्यन्तेन**॥ श्रीमन्निति सम्बुद्ध्यन्तं, श्रीमदिति मन्दिरविशेषणं वा, श्रीरिह स्वरूपानुरूपैश्वर्यसम्पत्, तदतिशयश्च मतुबर्थः, आद्ये कर्तृत्वेनान्त्ये अधिकरणत्वेन च तद्वत्त्वं द्रष्टव्यम्, रङ्गशायिनः मन्दिरं मयि प्रविशति सति—पूर्वं वैमुख्यहेतुदुरितदूषिते मयि अनुकूल्यभूतसुराभिलाषलिप्सामात्रेण प्रविशति सति। पत्युः—पतिः विश्वस्येत्युक्तसर्वशेषिणः, पदाम्बुजं द्रष्टुं रङ्गशायिनो मन्दिरमविदूरतस्समीपे आयान्तं, अस्य च त्वामित्यनेनान्वयः। मयि प्रविशति आयान्तमित्यनेन तदेतत्काकतालीयमिति न्यायस्सूचितः, अविदूरत इत्यनेन च–'तद्दृष्टिगोचरास्सर्वे मुच्यन्ते सर्वकिल्बिषैः।' इत्युक्तप्रकारेण तत्सन्निधिप्रभावाद्वैमुख्यहेतु दुरितं नष्टमिति स्फोर्यते। पत्युः पदाम्बुजमित्यनेन तु–"देवतान्तरदासत्वादिभक्तिदृष्ट्यागस्त्यहेतुपः। साम्यदृष्ट्यापरमेशान्तो हरो स्वामीति बुद्धिमान्॥"–इत्युक्तपारमैकान्त्यविशेषो यतीन्द्रप्रवणस्य ध्वन्यते।

सुधानिधिमिव स्वैरस्वीकृतोदग्रविग्रहम् ।
प्रसन्नार्कप्रतीकाशप्रकाशपरिवेष्टितम् ॥ ३ ॥

श्रीरङ्गराजचरणाम्बुजदिदृक्षया श्रीरङ्गमन्दिरं प्रविशतो मम भवद्विपर्यीकारलाभः काष्ठविचायकस्य महानिधिलाभ इवेति भावः ॥ २ ॥

'आपादान्मौलिपर्यन्तं गुरूणामाकृतिं स्मरेत्। विग्रहालोक न परः' इत्यादिकमभिसन्धायाह—सुधानिधिमिति॥ स्वैरेण स्वेच्छया, स्वीकृतः अपूर्वतयोपात्तः, उदग्रोऽतिशयितरामणीयको विग्रहो येन स तथोक्तः, तादृशं; सुधानिधि क्षीरसागरमिव स्थितम्। अत्र स्वैरस्वीकृतेत्यत्यन्ताभिमतत्वं विग्रहस्य व्यज्यते; कर्मायत्तत्वे हि शरीरस्यानभिमतत्वमपि तदापतति। उदग्रेति सुधानिधित्वावस्थापेक्षयाऽपि रामणीयकातिशयोऽभिसंहितः। यथावस्थितस्य सुधानिधेरुपमानानर्हत्वव्यञ्जनाय चात्रोपमानशिक्षणं कृतं; तावताऽप्यभास्वरशुक्लत्वापत्त्याऽऽह प्रसन्नेत्यादि। प्रसन्नत्वमिह सौम्यशीतलत्वादीनां समवायः; तेन चार्को विशेष्यते। यथावस्थितस्य ह्यर्कस्योप्मलत्वादुपमानानर्हत्वं; प्रसन्नार्कप्रतीकाशेन प्रसन्नसूर्यसदृशेन, प्रकाशेन द्योतेन, परितस्समन्तात्, वेष्टितमावृतम्; इकः काश इति प्रतिशब्दस्य दीर्घः। पूर्वत्रात्र चाभूतोपमालङ्कारः; अत्र प्रबन्धे प्रायेणानुप्रासरशब्दालङ्कारः; अत्र तु सन्दर्भे कुलकं नाम शब्दालङ्कारश्च उपमादयश्चार्थालङ्कारास्तत्र तत्र द्रष्टव्याः। 'कुलकस्तु स्याद्वल्मीके काकतिंदुके। क्लीबे त्वेकान्वयश्लोकवृन्दे' इति हि रत्नमाला। अत्र प्रसन्नार्केत्यत्र 'तत्र गोविन्दमासीनं प्रसन्नादित्यवर्चसम्।' इत्युक्तभगवदन्वयप्रयुक्तं सौम्यत्वमभिप्रेतम्; 'हृदि निवसति यस्य सौम्यरूपः' इति ह्युक्तम्। पूर्वत्र माधुर्यगाम्भीर्यपावनत्वादीनि विवक्षितानि; अत्र तु स्वकान्त्या विश्वाप्यायकत्वं विवक्षितम्। अत्र सुधानिधिदृष्टान्तेनास्य शेषातारत्वं स्फोरितम्; यथोक्तं शतके—

पार्श्वतः पाणिपद्माभ्यां परिगृह्य भवत्प्रियौ ।
विन्यस्यन्तं शनैरङ्घ्री मृदुलौ मेदिनीतले ॥ ४ ॥

---

"नित्यं पत्युः परिचरणतो वर्णतो निर्मलत्वात्"—इत्यादि ॥ ३ ॥

आयातमित्युक्तमायानं विशिनष्टि—पार्श्वत इत्यादिना ॥ पार्श्वतः पार्श्वयोः, सप्तम्यास्तसिः ; भवतः सर्वविषयविरक्तस्य तव, प्रियौ—ज्ञानव्यवसायप्रेमसमाचारैर्निरतिशयप्रेमस्थानभूतौ वाधूलवरदनारायणतदनुजश्रीनिवासगुरुवर्यौ । यथोक्तं शतके—"प्रेमस्थानं वरवरमुने सन्तु सन्तश्शतं ते तुल्यः को वा वरदगुरुणा तेषु नारायणेन ।"—इति । मुक्तके च—'वरवरमुनिवर्यघनकृपापात्रम्' इति । पाणिपद्माभ्यां—पावनत्वभोग्यत्वादिना पद्मतुल्याभ्यां ; कराभ्यां परिगृह्य—बहिरन्तश्चैकरूप्येण गृहीत्वा ; यद्वा कन्याभिप्रायेण परिग्रहोक्तिः, परिग्रहो ह्युत्कृष्टकर्तृकापकृष्टकर्मकस्वीकारः । मृदुलौ सुकुमारौ, अङ्घ्री चरणौ, मेदिनीतले भूतले, शनैर्मन्दं, विन्यस्यन्तं निदधानं भवन्तमित्यन्वयः । अत्र परिगृह्येत्यनेन भवत्प्रियशब्दनिर्दिष्टयोः हस्तदानं व्यज्यते । उक्तं च भरद्वाजपरिशिष्टे—"नीचैस्संश्लेषणं हस्तदानं मार्गप्रदर्शनम् । पश्चात् पार्श्वपुरोयानं जयालोकादिभाषणम्"—इति ॥

यद्यपि—पाणिपद्माभ्यां परिगृह्येत्यनेन त्रिदण्डधारणस्यानवकाशः प्रतीयते ; स तु न युज्यते, त्रिदण्डधारणस्य नित्यशो विहितत्वात् । तथा च श्रीमति पाञ्चरात्रे तत्त्वसागरसंहितायां—"विष्णुरूपं त्रिदण्डाख्यं सर्वदा धारयेद्यतिः ।"—इति । अनुश्च—'विंशतिं धारयेन्मालां दश वा पञ्च नित्यशः'—इति । तथा विष्णुः—"उपवीतं त्रिदण्डं च पात्रं जलपवित्रकम् । कौपीनं कटिसूत्रं च न त्याज्यं यावदायुषम्"—इति । न चान्येन त्रिदण्डधारणं युज्यते, तस्यापि प्रतिषिद्धत्वात् ; यदाह शौनकः—"ब्रह्मसूत्रं त्रिदण्डं च शिखायद्भिर्भृयात्स्वयम् । धारयेदि-

अम्लानकोमलाकारमाताम्रविमलाम्बरम् ।

तरेणाथ प्रायश्चित्ती भवेद्यतिः"—इति ॥ तथाऽपि—सम्यग्ज्ञानवद्विषये केन चिन्निमित्तविशेषेण त्रिदण्डधारणस्य कादाचित्कविरहेऽप्यदोषात्; तथा च स्मृतिः—"शीलं वृत्तं श्रुतं ज्ञानं वैराग्यं धर्मलक्षणम्। ऐश्वर्यं विद्यते यस्य मात्राभिस्तस्य किं फलम्"—इति। त्रिदण्डं हि मात्रान्तर्भूतम्; भगवन्मन्दिरगमनस्य भगवत्प्रणामार्थत्वात्त्रिदण्डधारणस्य न भगवत्प्रणामेन सहानुष्ठातुमशक्यत्वात्त्रिदण्डधारणविरह उपपद्यते। उक्तं हि शाण्डिल्येन—

"निधाय दण्डवद्देहं प्रसार्य चरणौ करौ।
बद्ध्वा मुकुलवत्पाणी प्रणामो दण्डसंज्ञितः ॥
पादौ शिरस्तथा हस्तौ निकुञ्च्य मुकुलाकृती।
मनोबुद्ध्यभिमानेन प्रणामोऽष्टाङ्गसंज्ञितः ॥" —इति ॥

न हि त्रिदण्डधारणे पाण्योर्मुकुलीकरणमुपपद्यते, न चैकेन त्रिदण्डधारणमितरेण तु करेण प्रणाम इति युक्तं; एकहस्तप्रणामस्य निषिद्धत्वात्; तदुक्तं भगवता—"एकेन पाणिना यो वै प्रणमेद्देवमच्युतम्। तस्य दण्डः करच्छेद इति धर्मविदो विदुः"—इति। अतोऽत्र—पत्युः पदाम्बुजं द्रष्टुमायान्तमिति प्रक्रमानुसारात् पाणिपद्माभ्यां परिग्रहोक्तिरुपपन्ना; त्रिदण्डवियोगनिषेधस्तु प्रणामविशेषादिकालव्यतिरिक्तकालविषय इति भावः। शनैरित्यत्र 'दृष्टिपूतं न्यसेत् पादं' 'दृष्टिपूतपदन्यासी' इत्यादिकमभिसंहितम्। मेदिनीशब्देन च मधुकैटभमेदोमेदुराया भूमेरीदृशदिव्यचरणनलिनयुगलव्यतिकरो महाभाग्यपरिणाम इति व्यज्यते; अथवा दिव्यचरणयुगलं सस्नेहं भूमिरनुभवतीति व्यज्यते। ञिमिदा स्नेहन इति धातुपाठः ॥ ४ ॥

आपीनविपुलोरस्कमाजानुभुजभूषणम् ॥ ९ ॥

एवं पादाब्जसौभाग्यमनुभूय दिव्याङ्गसौकुमार्यमाश्रमोचितपरिधानसौष्ठवमवयवान्तरसौन्दर्यं चानुसन्धत्ते—अम्लानेति ॥ अम्लान इव कोमलो मृदुल आकारो विग्रहो यस्य, स तथोक्तः, तं; अम्लानस्तु महासहेतिकोशः। अम्लानः—(வாடாக்குறிஞ்சி); तस्य शिरीषमालत्यादिभ्योऽपि सौकुमार्यातिशयप्रसिद्ध्या तत्सादृश्यं वर्णितं; अनेन न केवल मङ्घ्र्योर्मृदुलत्वं, किं तु सर्वावयवेष्वित्युक्तं भवति। केचित्तु—उपरि पादत्रयेऽपि दीर्घोपक्रमत्वात्तदानुरूप्याय आद्यपादेऽपि दीर्घोपक्रमपाठमाद्रियन्ते; तत्र—अम्लान इव कोमलः अम्लानकोमलः, आ समन्तादम्लानकोमलः आम्लानकोमलः—इति विग्रहो द्रष्टव्यः। अम्लानशिरीष इत्यप्यन्ये। आताम्रं समन्ताद्रक्तं विमलं शुद्धमम्बरं यस्य स तथोक्तः, तम्। आताम्रत्वं गैरिकधातुना रक्तत्वम्; तदाह दत्तात्रेयः—"मोक्षाश्रमे स्मृतं वस्त्रं रक्तं गैरिकधातुना। धार्यं यज्ञोपवीतं तु सितं नवगुणान्वितम्"—इति। विमलत्वं च—सुधानिधिमिवेत्युक्तवर्णविशेषलब्धपरभागवत्त्वम्। एतेन सुधासमुद्रम्थितविद्रुमपटलसादृश्यं व्यज्यते। आपीनं तुङ्गम्, विपुलं विशालं, उरो वक्षो, यस्य स तथोक्तः, तम्; उरःप्रभृतिभ्यश्चेति बहुव्रीहौ कप्। आजानु जान्वभिव्याप्य भुजौ भूषणं यस्य स तथोक्तः, तम्। अत्र योग्यताभिप्रायेण भुजयोराजानुत्वमनुसंहितम्; नातः पार्श्वतः पाणिपद्माभ्यां परिगृह्येत्यनेन व्याघातः; तयोः श्रमाशङ्कया वा परमदयालोर्मध्ये मध्ये किञ्चित्काले भुजयोः प्रसारणादाजानुत्वं विवक्षितम्। अत्र—"चक्षुः कुक्षिश्च वक्षश्च घ्राणस्कन्धललाटकाः। सर्वभूतेषु निर्दिष्टा उन्नताङ्गास्सुखप्रदाः॥ दीर्घभ्रूबाहुमुष्कस्तु चिरञ्जीवी धनी नरः"—इत्यादिकं द्रष्टव्यम् ॥ ९ ॥

(१) 'पटसरया'-भेद.

अम्भोजबीजमालाभिरभिजातभुजान्तरम् ।
ऊर्ध्वपुण्ड्रैरुपश्लिष्टमुचितस्थानलक्षणैः ॥ ७ ॥

भिनेत्यनेन सहजयोरिव सदेशत्वमभिप्रेतम्; यथोक्तं महर्षिभिः— "नाभेरूर्ध्वमनायुष्यमधस्तात्तु तपःक्षयः। तस्मान्नाभिसमं कुर्यादुपवीतं विजानतो"—इति ॥ ६ ॥

एवं वक्षस्स्थलं तत्पार्श्वसम्बन्धिभुजयुगं भुजशिखरावलम्बि यज्ञसूत्रं तत्सदेशनाभिश्चानुसंहितम्। अथ तदुपरिस्पर्शिनीमब्जबीजमाला-मूर्ध्वपुण्ड्रांश्च भुजभुजान्तरादिसम्बन्धिनोऽनुसन्धत्ते—अम्भोजेति ॥ अम्भोजबीजमालाभिः पद्माक्षमालाभिः; अभिजातं सुन्दरं, भुजान्तरं भुजौ च तन्मध्यभूतं वक्षश्च यस्य स तथोक्तः, तं; उचितानि शास्त्रानुरूपाणि, स्थानानि उदरादीनि, लक्षणानि सान्तरालत्वदशाङ्गुलत्वसपादत्वादीनि येषां तथोक्ताः, तैरूर्ध्वपुण्ड्रैः; उपश्लिष्टं संयुक्तं, उपश्लेषोक्तिः पुष्पितवत् सुघटितत्वाभिप्रायिका; विशिष्टाधिकारिणां पद्माक्षमालादि स्मृतिसिद्धम्; तथा च भरद्वाजः—"पवित्राण्यब्जबीजानि शङ्खचक्राङ्क-भूषणम्। धारयेद्वैष्णवं नाम वैष्णवाश्रयमेव वा"—इति; पराशरश्च— 'उपवीतं शिखाबन्धमूर्ध्वपुण्ड्रं तथैव च। पद्माक्षमालां कौशेयं सततं धारयेद्विजः'—इति। मालाभिरिति बहुवचनं शतपत्रसहस्रपत्रबीज-कृतवैचित्र्यार्थकृतमालाबहुत्वं तुलसीकाष्ठखण्डकृतमालापवित्रमाला-बहुत्वं चाभिप्रैति। उक्तं च—'ये कण्ठलग्नतुलसीनलिनाक्षमाला.'— इत्यादि। ब्राह्मे च—"श्रीकृष्णतुलसीकाष्ठमणिमालां तथैव च। श्रीम-त्पवित्रं देवेन धारितं वै गले तथा। सह पद्माक्षमालां च"—इति। ऊर्ध्वपुण्ड्रविषये च वृद्धमनुः—"ऊर्ध्वपुण्ड्रं मृदा धार्यं यतीनां तु विशे-षतः। भस्मचन्दनगन्धादीन् वर्जयेदाचदायुषम्"—इति। पराशरश्च— "आदाय वैष्णवक्षेत्रान्मृत्तिकां विमलां सिताम्। मूलमन्त्रेणाभिमन्त्र्य

मृणालतन्तुसन्तानसंस्थानधवलत्विषा ।
शोभितं यज्ञसूत्रेण नाभिबिम्बसनाभिना ॥ ६ ॥

---

अथ वक्षसि स्थितं यज्ञसूत्रमनुसन्धत्ते–मृणालेति ॥ मृणालस्य बिसस्य, तन्तूनां सूत्राणां, सन्तानस्य विततिविशेषस्य, संस्थानस्येव सन्निवेशस्येव ; धवला त्विट् कान्तिर्यस्य तत्तथोक्तं, तेन ; यद्वा–धवला त्विट्, यस्य तद्धवलत्विट् । मृणालतन्तुसन्तानसंस्थानमिव धवलत्विडिति विग्रहे–उपमानानि सामान्यवचनैरिति सूत्रेण समासः ; अतो न व्यधिकरणबहुव्रीहिः ; 'संस्थानमाकृतौ मृत्यौ सन्निवेशे चतुष्पथे ।'–इति रत्नमाला । नाभिबिम्बस्य मण्डलाकारनाभेः, सनाभिना सहजेन ; 'अत्र च–'स्वरस्सत्वं च नाभिश्च गम्भीरा सम्प्रशस्यते ।'–इत्येतदनुसन्धेयम् ; 'सपिण्डास्तु सनाभयः । समानोदर्यसोदर्यसगर्भ्यसहजास्समाः'–इत्यमरः । समाना नाभिर्यस्येति विग्रहे बहुव्रीहौ ज्योतिर्जनपदेत्यादिना समानस्य सभावः । यज्ञसूत्रेण यज्ञोपवीतेन, शोभितम् । धवलत्विषेत्यत्र च–'धार्यं यज्ञोपवीतं स्यात्सितं नवगुणान्वितम् ।'–इति दत्तात्रेयवचनमभिप्रेतम् ; मेधातिथिरप्याह—"यतीनां त्रीणि शुक्लानि भवन्त्येतानि नित्यशः । यज्ञोपवीतं दन्ताश्च तथा जन्तुनिवारणम्"–इति ; जन्तुनिवारणं जलपवित्रम् । यज्ञसूत्रमिति यज्ञोपवीतपर्यायः ; तदुक्तं महर्षिभिः–"तन्महामुनिभिर्वेद्य ब्रह्मसूत्रमिति स्मृतम् । उपवीतं ब्रह्मसूत्रं सूत्रं यज्ञोपवीतकम् ॥ यज्ञसूत्रं देवलक्ष्य इत्याख्याप्यद्भमेण तु"–इति । यज्ञसूत्रेणेत्येकत्वं पद्येकत्ववद्विवक्षितम् ; तथा च व्यासभरद्वाजौ–"एकमेव यतेस्सूत्रं सामिनं ब्रह्मचारिणः । सोत्तरीयाणि गृहिणस्तथैव वनवासिनः"–इति ; तथा भृगुरपि–"उपवीतं वटोरेकं द्वे तथेतरयोः स्मृते । एकमेव यतीनां स्यादिति शास्त्रस्य निश्चयः"–इति । सना-

अम्भोजबीजमालाभिरभिजातभुजान्तरम् ।
ऊर्ध्वपुण्ड्रैरुपश्लिष्टमुचितस्थानलक्षणैः ॥ ७ ॥

---

भिनेत्यनेन सहजयोरिव सदेशत्वमभिप्रेतम् ; यथोक्तं महर्षिभिः—"नाभेरूर्ध्वमनायुष्यमधस्तात्तु तपःक्षयः । तस्मान्नाभिसमं कुर्यादुपवीतं विजानतो"—इति ॥ ६ ॥

एवं वक्षस्स्थलं तत्पार्श्वसम्बन्धिभुजयुगं भुजशिखरावलम्बि यज्ञसूत्रं तत्सदेशनाभिश्चानुसंहितम् । अथ तदुपरिस्पर्शिनीमब्जबीजमाला-मूर्ध्वपुण्ड्रांश्च भुजभुजान्तरादिसम्बन्धिनोऽनुसन्धत्ते—अम्भोजेति ॥ अम्भोजबीजमालाभिः पद्माक्षमालाभिः; अभिजातं सुन्दरं, भुजान्तरं भुजौ च तन्मध्यभूतं वक्षश्च यस्य स तथोक्तः, तं ; उचितानि शास्त्रानुरूपाणि, स्थानानि उदरादीनि, लक्षणानि सान्तरालत्वदशाङ्गुलत्वसपादत्वादीनि येषां तथोक्ताः, तैरूर्ध्वपुण्ड्रैः; उपश्लिष्टं संयुक्तं, उपश्लेषोक्तिः पुष्पितवत् सुघटितत्वाभिप्रायिका ; विशिष्टाधिकारिणां पद्माक्षमालादि स्मृतिसिद्धम् ; तथा च भरद्वाजः—"पवित्राण्यब्जबीजानि शङ्खचक्राङ्क-भूषणम् । धारयेद्वैष्णवं नाम वैष्णवाश्रयमेव वा"—इति ; पराशरश्च—'उपवीतं शिखाबन्धमूर्ध्वपुण्ड्रं तथैव च । पद्माक्षमालां कौशेयं सततं धारयेद्विजः'—इति । मालाभिरिति बहुवचनं शतपत्रसहस्रपत्रबीज-कृतवैचित्र्यार्थकृतमालाबहुत्वं तुलसीकाष्ठखण्डकृतमालपवित्रमाला-बहुत्वं चाभिप्रैति । उक्तं च—'ये कण्ठलग्नतुलसीनलिनाक्षमालाः'—इत्यादि । ब्राह्मे च—"श्रीकृष्णतुलसीकाष्ठमणिमालां तथैव च । श्रीम-त्पवित्रं देवेन धारितं वै गले तथा । सह पद्माक्षमालां च"—इति । ऊर्ध्वपुण्ड्रविषये च वृद्धमनुः—"ऊर्ध्वपुण्ड्रं मृदा धार्यं यतीनां तु विशे-षतः । भस्मचन्दनगन्धादीन् वर्जयेद्यावदायुषम्"—इति । पराशरश्च—"आदाय वैष्णवक्षेत्रान्मृत्तिकां विमलां सिताम् । मूलमन्त्रेणाभिमन्त्र्य

ऊर्ध्वपुण्ड्राणि धारयेत् ॥ ललाटादिषु चाङ्गेषु केशवादीन् यथाक्रमम् । त्र्यङ्गुलं द्व्यङ्गुलं वाऽपि सान्तरालं प्रकल्पयेत् । पार्श्वमङ्गुलिमात्रं तु ऊर्ध्वपुण्ड्रस्य लक्षणम् ॥ हरेः पादाकृतिं रम्यं सुपार्श्वं सुमनोरमम् । नासिकामूलमारभ्य ललाटान्तं सुविन्यसेत् ॥ ऊर्ध्वपुण्ड्रप्रमाणानि स्थानानि द्विजसत्तमाः । व्यूहभेदानि नामानि वक्ष्यामि च पृथक्पृथक् ॥ चतुस्त्र्यङ्गुलं वाऽपि विस्तारं परिकल्पयेत् ॥ ललाटे केशवायेति चतुरङ्गुलमायतम् । चतुश्चक्रधरं देवं शुद्धजाम्बूनदप्रभम् । कुक्षौ नारायणायेति धारयेत्तु दशाङ्गुलम्"–इत्यादि । तथा श्रीपाञ्चराते पराशरसंहितायां स एवाह—"नासादौ द्व्यङ्गुलं पादं मध्यं सार्धाङ्गुलं भवेत् । पार्श्वमङ्गुलिमात्रं तु सुस्पष्टं धारयेद्द्विजः"–इति । पाद्मपुराणे–'आरभ्य नासिकामूलं ललाटान्तं सुविन्यसेत् । समारभ्य भ्रुवोर्मध्यमन्तरालं प्रकल्पयेत्"–इति; 'अन्तरालं द्व्यङ्गुलं स्यात् पार्श्वौ चाङ्गुलमात्रकौ'–इति च । 'ह्रस्वं दीर्घं ततं तनु । वक्रं विरूपं बद्धाग्रं छिन्नमूलं पदच्युतम् । अशुभ्रम्'–इत्यारभ्य, 'पुण्ड्रमाहुरनर्थकम्'–इति च; पदच्युतं–च्युतपदमित्यर्थः, बिन्दुच्युतमित्यादिवत्, न तु पदरूपेण च्युतमिति; रूपेणेत्यध्याहारप्रसङ्गात्; छिन्नमूलमशुभ्रमिति च पूर्वोत्तरवैरूप्यप्रसङ्गाच्च । भरद्वाजश्च–'उदरे हृदि कण्ठे च दशाष्टचतुरङ्गुलान्'–इत्यादि विस्तरेणाह । 'त्रयोदश द्वादश वाऽप्यूर्ध्वपुण्ड्राणि धारयेत्'–इति स एवाह ॥ अत्र च सङ्ख्याविशेषानुक्तिरुभयसम्भवाभिप्रायेण; 'यद्वा दशोर्ध्वपुण्ड्राणां धारणं तच्च पावितम्'–इत्यन्यपरोक्त्याप्येतत्परामर्शदर्शनात् । अत्रापि द्वादशसङ्ख्यैव वा विवक्षिता । अत्र श्रीचूर्णधारणमप्यभिप्रेतम्; यथाऽह पराशरः–'ऊर्ध्वपुण्ड्रस्यान्तराले हरिद्रां धारयेच्छ्रियम्'–इति । भरद्वाजश्च–'ततो दिव्यं च हारिद्रं सहेमतुलसीदलम् । मन्त्रेण धारयेच्चूर्णम्'–इति ॥ अम्भोजगीत्यादिशब्दे चामहल्लक्षणा बोध्या ॥ ७ ॥

काश्मीरकेसरस्तोमकडारस्निग्धरोचिषा ।
कौशेयेन समिन्धानं स्कन्धमूलावलम्बिना ॥ ८ ॥

एवमूर्ध्वपुण्ड्रानुबन्धात् स्कन्धमूलं तत्स्थमुत्तरीयं चानुसन्धत्ते—**काश्मीरेति** ॥ काश्मीरकेसराणां कुङ्कुमकुसुमकिञ्जल्कानां स्तोमस्येव सङ्घातस्येव कडारं रक्तं स्निग्धं रोचिः कान्तिर्यस्य तत्तथोक्तं, तेन; स्निग्धशब्देन चाकचक्यं विवक्षितम्। स्कन्धमूलं कण्ठमूलमवलम्बत इति स्कन्धमूलावलम्बि, सुप्यजातौ णिनिः। कौशेयेन कृमिकोशोत्थवस्त्रविशेषेण, समिन्धानं परभागेन दीप्यमानम्। अत्र स्कन्धमूलावलम्बिनेत्युत्तरीयत्वेन धारणमभिसंहितम्। पाराशरो हि चतुर्णामाश्रमाणां पृथक्पृथक् परिधानं वक्ष्यन् आदौ चातुराश्रम्यसाधारणं कौशेयधारणं पृथगाह—'उपवीतं शिखाबन्धमूर्ध्वपुण्ड्रं तथैव च । पद्माक्षमालां कौशेयं सततं धारयेत् द्विजः'–इति; नोत्तरीयमिति निषेधस्त्ववैष्णवयतिविषयः। आयान्तमित्यागमनसमयावस्थितदशानुसन्धाने च स्कन्धमूलावलम्बिनेत्युक्तिरुपपद्यते। यतश्शाण्डिल्येन प्रणामकाल एव कण्ठगतवस्त्रत्वं प्रतिषिद्धम्; यथा–'प्रदक्षिणे प्रणामे च पूजायां हवने तथा। न कण्ठगतवस्त्रस्याद्दर्शने गुरुदेवयोः'–इति। कौशेयस्य कषायवर्णत्वमन्यत्राप्युक्तं–'कषायमेव कार्पासं वासः कन्थां न धारयेत्। वल्कलं वाऽजिनं वाऽपि कौशं शाणमयं तु वा'–इति ॥ ८ ॥

अथ स्कन्धमूलसन्निकर्षादधरसौभाग्यमनुभवति–मन्त्ररत्नेति ॥ मन्त्ररत्नपदं द्वये योगरूढं; तत्र सर्वमन्त्रश्रेष्ठत्वं योगार्थः, श्रीमन्नारायणेत्याद्यानुपूर्वी विशेषो रूढ्यर्थः। योगरूढिश्च–'सर्वेषामेव मन्त्राणां मन्त्ररत्नं द्वयाह्वयम्। मन्त्ररत्नं द्वयं न्यासः प्रपत्तिश्शरणागतिः। नामानि मन्त्ररत्नस्य पर्यायेण निबोध मे'–इत्यादितोऽवगता। अस्य सर्वमन्त्रश्रेष्ठत्वं पराशराय नारदेनोक्तम्—"मन्त्राणां परमो मन्त्रो

मन्त्ररत्नानुसन्धानसन्ततस्फुरिताधरम् ।
तदर्थतत्त्वनिध्यानसन्नद्धपुलकोद्गमम् ॥ ९ ॥

गुह्यानां गुह्यमुत्तमम्। रहस्यानां रहस्यं च सद्यस्संसारतारणम्। सर्वसंशयभेत्ता च सर्वकल्मषनाशनः। शरणागतिमन्त्रोऽयं सर्वसम्पच्छुभावह."—इति। पराशरेणाप्युक्तम्—'न्यासाख्यं परमं मन्त्रं संसारच्छेदनं शुभम्। सर्वदं सर्वपापघ्नं महत्प्रियतरं विभोः'—इति। लक्ष्म्या चोक्तम्—'वेदामृतमहाम्भोधेर्हरिणा द्वयमुद्धृतम्'—इति। एतादृशोत्कर्षविवक्षयैवात्र मन्त्ररत्नपदमुपात्तम्। तस्यानुसन्धानेन उपांशूच्चारणेन सन्ततं सर्वदा स्फुरितः किञ्चिच्चलितोऽधरो यस्य स तथोक्तस्तम्। अत्र सन्ततस्फुरितत्वोक्तिरनुसन्धानस्य सदातनत्वं व्यञ्जयति; तथा चोक्तम्—"अनेन मन्त्ररत्नेन मत्प्रियेण भवेत्सदा"—इति। पराशरेण चोक्तम्—'यावच्छरीरपातं तु द्वयमावर्तयेन्मनुम्'—इति। स्फुरितपदेन चोच्चारणस्यात्यन्तोपांशुत्वं लब्धम्; तेन च 'मन्त्रं यत्नेन गोपयेत्' इति शास्त्रार्थोऽनुष्ठितो भवतीति ध्वनितम्॥ अनन्योपायानां मन्त्ररत्नादेः स्वरूपतोऽनुपादेयत्वादाह—तदर्थेत्यादि। अर्थानुसन्धानरूपदृष्टविधया तदुपकारोऽनन्योपायानां न लुप्यतीति भावः। तस्य मन्त्ररत्नस्यार्थे पुरुषकारोपायाद्यात्मकतत्त्वतत्प्रपत्त्यनुष्ठानात्मकहितरूपेऽभिधेये यत्तत्त्वं पुरुषकारतदुद्भावितगुणयोगतद्विशिष्टसिद्धोपायतदीयविग्रहतदुपलक्षकचरणादिरूपसिद्धवस्तु, तस्य निध्यानेन सन्नद्धसज्जः पुलकोद्गमो रोमाञ्चोदयो यस्य स तथोक्तः, तम्; 'सन्नद्धौ सज्जवर्मितौ'—इति कोशः; नीत्युपसर्गेण ध्याने प्राप्तिदशाभाविरसविशेषनिष्पादनसमर्थवैशद्यविशेषोपधायकभावनाप्रकर्षपर्यन्तत्वं विवक्षितम्; तेन सन्नद्धपुलकोद्गमत्वोक्तिरुपपद्यते। अत्र च मन्त्ररत्नस्य प्रपत्त्यनुष्ठानं प्रति करणमन्त्रत्वादनुष्ठानस्य च सकृत्त्वात्

स्मयमानमुखाम्भोजं दयमानदृगञ्चलम् ।
मयि प्रसादप्रवणं मधुरोदारभाषणम् ॥ १० ॥

---

सन्तनानुसन्धानानिध्यानोक्त्यनुपपत्तिरिति शङ्कापनोदनाय तत्त्वपद-मुपात्तम् । अनेन चानुष्ठानापेक्षया तयोरनुपपन्नत्वेऽपि कालक्षेप-भोगार्थतया तदुपपत्तिरित्युक्तं भवति ॥ यद्वा—तदर्थस्य मन्त्ररत्नार्थस्य यत्तत्त्वं पर्यवसितं याथात्म्यं तस्य निध्यानेनेत्यादिरर्थः । पर्यवसितं याथात्म्यं च—'विष्णुश्शेषी तदीयश्शुभगुणनिलयो विग्रहश्श्रीशठारि-श्श्रीमान् रामानुजार्यः पदकमलयुगं भाति रम्यं तदीयम्'-इति भगवत्कृष्णपादानुगृहीतरीत्या रामानुजस्य चरणशब्दार्थत्वं; तस्यैव यतीन्द्रप्रवणं प्रत्यनुसन्धेयत्वादिति बोध्यम् । सन्नद्धपुलकोद्गमं भवन्तं पश्यन्नित्यत्र च—'आह्लादशीतनेत्राम्बुः पुलकीकृतगात्रवान् । सदापर-गुणाविष्टो द्रष्टव्यस्सर्वदेहिभिः'—इति शास्त्रार्थोऽनुष्ठितो भवति; उक्तं च भरद्वाजपरिशिष्टे—'भक्तिज्ञानसमाचारवैराग्याद्यनुमोदनम्'—इति ॥ ९ ॥

अथ—अधरसन्निहितं स्मितं तत्कान्तिव्यतिकरितमपाङ्गं तदुभय-संवादि वचनामृतं तदूह्येयं स्वस्मिन्ननुग्रहं चानुसन्धत्ते—स्मयमानेति ॥ स्मयमानं सदा मन्दहासयुक्तं, मुखमेवाम्भोजं यस्य स तथोक्तस्तम्; ष्मिङ् ईषद्धसन इति धातुपाठः । मन्दहासान्वयात् मुखाम्भोजमिति परिणामालङ्कारः; उपमायां त्वम्भोजमुखमिति स्यात् । पूर्वोक्तभाव-नाप्रकर्षात् प्राप्यस्य लब्धत्वबुद्ध्या स्वकार्थ्यानुसन्धानेन सन्तोषात् सदा मन्दहासयुक्तत्वं वक्ष्यमाणमधुरोदारभाषणस्य स्मितपूर्वकत्वं चाऽप्योच्यते । जनानामीदृशपुरुषार्थहान्यनुसन्धानेन परदुःखदुःखित्व-लक्षणदयाऽपि सर्वदेत्याह—दयमानेति । दयमाने दयाव्यञ्जकत्वेन सदा दयायुक्ते दृशोरञ्चले अन्तौ यस्य स तथोक्तस्तम् । दृगञ्चलम्-

आत्मलाभात्परं किञ्चिदन्यन्नास्तीति निश्चयात् ।
अङ्गीकर्तुमिव प्राप्तमकिञ्चनमिमं जनम् ॥ ११ ॥

---

पाङ्गं, भाषणहेतुदया वाऽत्रोच्यते । सन्तोषो दया चावश्यकधर्मौ; तदाह बृहस्पतिः—"क्षमा तीर्थं तपस्तीर्थं तीर्थमिन्द्रियनिग्रहः । सर्वभूतैदया तीर्थं ध्यानं तीर्थमनुत्तमम् ॥ एतानि पञ्च तीर्थानि सत्यं षष्ठं तु सर्वदा"--इति । अन्यत्र च—'सन्तोषो गुरुशुश्रूषा ह्यप्रमादः क्षमा दया'—इत्युक्तम् । भरद्वाजपरिशिष्टे च—'सत्यशौचदयाधैर्यक्षमासन्तोषयुक्तता'—इत्युक्तम् । तथा पराशरः—'साधारणं तु सर्वेषां शङ्खचक्रादिधारणम् । अहिंसा सत्यमक्रौर्यं शौचमिन्द्रियनिग्रहः । दानं दमः क्षमा विद्या सर्वेषां मुनिभिस्स्मृतम्'—इति । स्वस्मिन्नसाधारणं प्रसादमाह—मयीति; मयि--एतावन्तं कालं विमुखे मयि, प्रसादे अनुग्रहे, प्रवणं आसक्तं; प्रसादः कालुष्यनिवृत्तिर्वा । मद्वैमुख्यमनुसन्धाय शोकाविष्टहृदयस्याद्य मदाभिमुख्यदर्शनेन तन्निवृत्तिर्जातेति भावः । प्रसादकार्यमाह—मधुरेति; मधुरं—'संश्रवे मधुरं' इतिवच्छ्रवणदशायामेव प्रियं, उदारमर्थतो गभीरं, भाषणं वाक्यं यस्य स तथोक्तस्तम् । अर्थतो गभीरत्वं च पूर्वोक्तमन्त्ररत्नार्थविश्रान्तिः; अतस्सन्ततस्फुरिताधरत्वोक्त्या न विरोधः । वाङ्माधुर्यं चावश्यकधर्मः; तदाह मेधातिथिः—'सूनृतामीरयेद्वाचम्'—इति; शाण्डिल्योऽपि—"अर्थयुक्तं च सत्यं च श्राव्यं प्रियकरं मधु । शुद्धं मितं च युक्तं च कालयोग्यं वदेद्वचः"—इति । 'आगच्छ गच्छ तिष्ठेति स्वागतं सुहृदः प्रति । सम्मानमपि न ब्रूयान्मुनिर्मोक्षपरायणः"—इत्यादिकं त्ववैष्णवविषयमिति भावः ॥ १० ॥

एवमेभिर्द्दयमानदगधाऽऽत्वादिभिर्मन्ये मद्विपर्याकारोद्देशेनैव मदागमनावसरं प्रतिसन्धाय रङ्गमन्दिरं मयि प्रविशत्यायातो न तु यदृच्छया समागत इत्याह—आत्मेति ॥ आत्मनः कौस्तुभस्थानीयस्य

भवन्तमेव नीरन्ध्रं पश्यन्वश्येन चेतसा ।
मुने वरवर स्वामिन्मुहुस्त्वामेव कीर्तयन् ॥ १२ ॥

लाभात् प्राप्तेरन्यत्किञ्चित् किमपि परमुत्कृष्टं नास्तीति निश्चयात् व्यवसायाद्धेतो अकिञ्चनमङ्गीकारहेतुलवविरहिणमिमं परित्यागहेतुदोषभूयिष्ठजनं मामित्यर्थः । उक्ताकिञ्चन्यविशेषदृढीकरणाय जनमिति सामान्यव्यपदेशः । अङ्गीकर्तुं स्वीकर्तुं, प्राप्तमिवायातमिव, स्थितं भवन्तमित्यर्थः । 'प्रणष्टस्य यथा लाभः' इत्युक्तरीत्या स्वलाभः स्वामिनोऽभिमत इति तत्साहाय्यकमपि ञेपिमुखोल्लासहेतुरित्यात्मलाभस्य प्रकृष्टपुरुषार्थत्वमिति भावः । यथोक्तं शतके–' आत्मनश्शोधयित्वा पश्चाभर्तुः प्रतिदिनमिह प्रेषयन् प्राभृतानि'–इति । इवशब्दस्सम्भावनायाम् ॥ ११ ॥

'विग्रहालोकनपरः कीर्तनं श्रवणं स्मृतिः' इत्यादिकं हृदि निधायाह–भवन्तमिति ॥ स्वामिन् स्वकीयं वस्तु स्वयमेवाभिमन्यमान, 'स्वाम्यं स्वीयाभिमानिता'–इत्युक्तम् । एतेन स्वयमेव स्वसम्बन्धं मय्यनुसन्धाय विमुखं मामङ्गीकृतवानिति व्यज्यते । मुने मद्विषयीकारमननशील, वरवर, भवन्तं पूर्वोक्तसौन्दर्यसौलभ्यादिगुणपूर्णम्, एवकारेण द्रष्टव्यान्तरव्युदासः । नीरन्ध्रं निरन्तरं पश्यन्, वश्येन स्वत्कटाक्षविशेषवशात् मद्वशवर्तिना, चेतसा मनसा, त्वामेव कीर्तनीयं स्वामेव, कीर्तयन् । अनयोश्च अध्याहृतेनाहमित्यनेनोत्तरश्लोकेऽन्वयः । लक्षणहेत्वोः क्रियाया इति हेत्वर्थकशत्रादेशः । अनेन दर्शनकीर्तनयोर्भवत्प्राप्त्यास्पदत्वे हेतुत्वमुक्तं भवति, तच्चाचार्यनिष्ठाविशेषस्य सिद्धोपायाधिकारिपङ्क्तिसम्पादनविधया सिद्धोपायाधीनविरोधिनिवृत्तिप्रयोजकत्वरूपं, इन्द्रियाणां प्राप्तविषयदर्शनकीर्तनादिसुखव्याप्तत्वेन भवत्प्राप्तनामनवकाशपराहतत्वापादकत्वरूपं वा ॥ १२ ॥

त्वदन्यविषयस्पर्शविमुखैरखिलेन्द्रियैः ।
भवेय भवदुःखानामसह्यानामनास्पदम् ॥ १३ ॥

---

अनुक्तानामिन्द्रियाणामपि स्वाचार्यप्रावण्याशंसापूर्वकं स्वस्य भवदुःखासम्बन्धं प्रार्थयते—त्वदन्येति ॥ त्वदन्येषां विषयाणां स्पर्शे सम्बन्धे विमुखैः द्वेषवद्भिः, त्वदन्यत्वमेव विषयाणां द्वेष्यत्वे निबन्धनं, न स्वल्पास्थिरत्वादिकमिति भावः । अखिलेन्द्रियैः उक्तानुक्तैः करणैः, अहं—अहमिति चाध्याहारो भवेयमित्युक्तेः, असह्याना—'सर्वं सहे' इत्यध्यवसितेनापि दुस्सहानां, भवदुःखानां शरीरसम्बन्धनिबन्धनानामुपक्लेशानां, अनास्पदमनधिकरणं, भवेय भवितुमाशासे इत्यर्थः ॥ अत्र च—पश्यन्निति चक्षुषः, वश्येन चेतसेति मनसः, कीर्तयन्निति वागिन्द्रियस्य, मधुरोदारभाषणमिति श्रोत्रस्य, स्वचरणाम्भोजस्पर्शसम्पन्नसौरभ्यैस्तीर्थैरिति वक्ष्यमाणत्वात् घ्राणरसनयोः, दीनं प्रणमत इति पाणिपादस्य, पदद्वयं दत्त्वेति त्वगिन्द्रियस्य च विनियोगविशेषोऽनुसन्धेयः, विषयान्तरवैमुख्योक्तेः । कुर्वद्रूपाणां करणानां प्राप्तविषयविनियोगोऽर्थसिद्धः । तदिदमाह शाण्डिल्यः—'प्रतिषिद्धेष्वसक्तयत् सक्तं शब्देषु साधुषु । भगवद्विषयेष्वेव शुद्धं तच्छ्रोत्रमुच्यते ॥ अस्पृश्यमस्पृशन्ती या स्पृशन्ती स्पृश्यमेव च । तत्राप्यलोलुपा सा तु त्वक् शुद्धेति निगद्यते ॥ पाषण्डपतितार्चेषु न पतन्ती कदाचन । अरूक्षा सम्पतन्ती दृक् शुद्धा भागवतादिषु । भोज्यानेव रसान् रस्ये नात्यन्तचपला रसे । काले मितं च सा जिह्वा परिशुद्धेति कीर्त्यते', '·मेध्यगन्धेषु योजिता । युक्तेष्वलोलुपा या सा नासा शुद्धेति कीर्त्यते', 'पुण्यस्तवादिपठने निरता प्रियवादिनी । सत्ये परहिते सार्धमितेक्षणसयुते । युक्तासैरमुपूता वाक्', 'अभ्यञ्जनादिव्यापारे यत्तं पित्रोर्गुरोस्तथा' इत्युपक्रम्य, 'शुद्धं पाणितलं मतम्'—इत्यादिना ॥

था भरद्वाजपरिशिष्टेऽपि—"ये सन्ति तत्र नियतास्ते सन्त इति कीर्तिताः। सर्वात्मना तु यावृत्तिस्तेषु भक्तिमयी परा। सा भक्तेः परमा काष्ठा वृत्तेश्च परमात्मनि। आचार्यवद्देवतावन्मातृवत्पितृवत् स्वयम्। सुहृद्वत्स्वामिवत्सन्तो द्रष्टव्या राजवत्तथा। श्रुत्वैव सहसोत्थानं प्रत्युत्थानं सुदूरतः। दर्शनानुभवप्रीतिः प्रणिपातो निवेदनम्। नीचैस्संश्लेषणं हस्तदानं मार्गप्रदर्शनम्। पश्चात्पार्श्वपुरोयानं जयालोकादिभाषणम्। पादावनेजनं चार्घ्योपहारस्स्वागतादि च। प्रसादनं क्षामणं च प्रीतिसङ्कथनानि च। उपासनं प्रश्रयणमात्मात्मीयनिवेदनम्। आज्ञाम्यर्थनमालोकनिर्देशवचनादरः। साधनं सम्पदामिष्टादरोऽनिष्टनिवर्तनम्। विरहानिष्टपीडावमाननाद्यसहिष्णुता। दास्याभिमानोऽनुमज्या श्रवणं कीर्तनं स्तुतिः। भक्तिज्ञानसमाचारवैराग्याद्यनुमोदनम्। सङ्गमेच्छोपगमनमन्वक्स्थानासनादिकम्। समानसुखदुःखत्वं मिथश्चार्थविचिन्तनम्। क्रियाकालेऽनुवरणं सदस्यग्रे च पूजनम्। परिषत्सु च सान्निध्यं संविदां च प्रवर्तनम्। सदाऽभ्यनुज्ञापूर्वं च सर्वार्थेषु प्रवृत्तयः। प्रच्छादनं च दोषाणां गुणानां ख्यापनं तथा। क्वचिच्चैवाप्यधर्मेण कृच्छ्रेणाप्यर्थसाधनम्। एताश्चान्याश्च विविधा वृत्तयो रसनिर्भराः। विष्णुभक्तेषु वृत्त्याख्यतरोर्हि फलसम्पदः"—इति सर्वकरणानामाचार्यविषयविनियोगविशेषास्सम्यगुक्ताः॥ सतामाचार्यमुख्यानामित्युपरितनग्रन्थस्वरसात् 'ते सन्त इति कीर्तिताः' इत्यत्र सच्छब्देनाचार्यसङ्ग्रहः स्पष्टः। अत्र चोर्ध्वपुण्ड्रोपश्लिष्टं पत्युः पदाम्बुजं द्रष्टुमायान्तमिति प्रातःकालानुयाय्यभिगमनं सूचितम्; तदुक्तं शाण्डिल्येन—'सद्याभिगमनेनैव प्रातःकालानुयायिना। वक्ष्यामि योगादूर्ध्वं यत् कर्तव्यं स्नानपूर्वकम्'—इति। आत्मलाभात्परमिति चोपादानं सूचितं, यथाधिकारमुपादानस्यानुष्ठेयत्वात्; भगवद्यागयोग्यद्रव्यसम्पादनं ह्युपादानं, तद्धि यथाश्रमधर्मं स्वीकार्यम्। मन्त्ररत्नानुसन्धानेति स्वाध्याय',

परेद्युः पश्चिमे यामे यामिन्यास्समुपस्थिते ।
प्रबुध्य शरणं गत्वा परां गुरुपरम्पराम् ॥ १४ ॥

तदर्थतत्त्वनिध्यानेति योगश्च सूचिताविति प्रायेण ग्रन्थार्थोऽपि सङ्गृहीतः; यथोक्तं भरद्वाजेन—'कृत्वाभिगमनं पूर्वमुपादाय च सम्पदः । इज्याधीत्य च युञ्जानो भागैः कालं नयेत्'—इति; 'ब्रह्मचारी गृहस्थश्च वानप्रस्थोऽथ भिक्षुकः । एकान्तिनस्त्वधर्मस्थास्सर्वे यान्ति परां गतिम्'—इति च ॥ १३ ॥

इति दिनचर्याव्याख्यायां सदाचारदीपिका-
समाख्यायां उपोद्घातविभागः ॥

अथ—सङ्ग्रहेणोक्तानर्थान् विस्तरेण वक्तुमुपक्रमते—परेद्युरित्यादिना ॥ इह खलु योग्यतापादकैस्सह साङ्गसकलधर्मत्यागस्य सिद्धोपायस्वीकाराङ्गत्वेन विधानेऽपि विनियोगपृथक्त्वन्यायेन वा कर्मान्तरत्वन्यायेन वा नित्यनैमित्तिकादीनां धर्माणां कैङ्कर्यभूतानामनुष्ठानं, आनृशंस्येन या कथञ्चित्तेषामनुष्ठानमिति सिद्धान्तात् पाञ्चकालिककर्मणां परमकारुणिकेन परमशेषिविषयपरिचरणैकपरायणेन भगवता वरवरमुनिना नित्यानुष्ठानात् 'गुरोर्वार्ताश्च कथयेत्' इति शास्त्रतो भक्तितश्च तत्प्रबन्धनिबन्धनस्य शिष्यस्योचितत्वादेतत्प्रबन्धारम्भ आवश्यकः। अर्वाचीनानामपि पाञ्चकालिकक्रियानुष्ठानप्रतिष्ठापकत्वादप्ययं प्रबन्ध आवश्यकः । प्रयोजनान्तरमपि साम्प्रदायिकं पूर्वमेवोक्तम् ॥ .

परेद्युः, यामिन्या रात्रेः, पश्चिमे चतुर्थे यामे, समुपस्थिते सति, प्रबुध्य स्वापं हित्वा, परां गुरुपरम्परां शरणं गत्वा, शरणं गुरुपरम्परां गत्वा बुध्वा वा। अत्र परेद्युरितिपदं मयिप्रविशतीत्युक्तयादृच्छिकसमागमो यस्मिन् दिने तदुत्तरदिन इत्यर्थकम्; इदं च प्रदर्शनार्थं,

पाञ्चकालिककर्मणां नित्यानुष्ठेयत्वात्, तथा भगवताऽनुष्ठितत्वाच्च। तदुक्तं काव्ये–'नित्यं निशावसानेषु सोऽयं शुद्धेन चेतसा। प्रबुध्य सुचिरं दध्यौ परां गुरुपरम्पराम्'–इत्यादिना नित्यानुष्ठितत्वम्॥ यद्यपि परे द्यवीत्येवानुशासनसिद्धम्, तथाऽपि स्मृतिषु तद्विवरणनिबन्धनेषु च बहुलं प्रयोगात् परेद्युरित्येतदपि साध्वेव; 'दिनद्वयं समाश्रित्य पौर्णमासी यदि स्थिता। परेद्युरसङ्गवं व्याप्ता स्थिता सा कर्मणोऽर्हति'–इति निगमे प्रयोगात्; कालनिर्णयादिनिबन्धनग्रन्थेष्वपि–'परेद्युर्द्वादश्यभावविषयं' 'परेद्युर्दिवा पारणम्'–इत्यादिप्रयोगाच्च हि साधुत्वं सुस्थम्। तस्यात्र प्रयोगश्च स्वग्रन्थस्य स्मृतिग्रन्थमूलकत्वव्यञ्जनार्थ.। रात्रावन्त्ययामे प्रबोधादिकं पराशरेण विस्तरेणोक्तं–'उत्थाय पश्चिमे यामे आचम्य प्रयतात्मवान्। उपविश्य शुचौ देशे समासीनस्सुखासनः'–इत्यादिना; पश्चिमे याम इति निर्देशोऽपि स्वग्रन्थार्थस्य पराशरादिधर्मशास्त्रमूलकत्वस्यापि स्फोरणार्थः। गौतमश्चाह–"उत्थाय पश्चिमे यामे शान्तमानसोऽपनिद्रसति विरोधे तत्यक्त्वा नो चेत्तत्र संस्थित."—इति। शाण्डिल्योऽपि–'सुखनिद्रारतः काले हन्तेत्युत्थाय सत्वरम्। प्रक्षाल्य पादमुत्थाय युञ्जीतापि यथाविधि॥ आद्यन्तवर्ज निद्राया योग्यं यामद्वयं निशि। चतुर्थे याम उत्थाय योगी योगं समाचरेत्'–इति। उत्तरत्र रहस्यत्रयानुसन्धानस्य वक्ष्यमाणत्वात्तदङ्गभूतं गुरुपरम्परानुसन्धानमत्रोक्तम्। तदुक्तं पराशरेण–'स्वाचार्यं हृदये ध्यात्वा जप्त्वा गुरुपरम्पराम्'–इत्युपक्रम्य, 'मन्त्रमध्यापयेद्गुरुः। न्यासाख्यं परमं मन्त्रम्'–इति। भरद्वाजपरिशिष्टेऽपि–'आदौ गुरूणां विज्ञानमथ मन्त्रार्थचिन्तनम्। तत एवात्मनो ज्ञानं तद्धर्माणां च सर्वश। परस्य पुंसः श्रीशस्य परेशस्य परात्मनः। स्वरूपरूपविभवगुणव्यापारचिन्तनम्'–इत्यादि विस्तरेणोक्तम्। अयमेव च क्रम. शरणं गत्वेत्यादिके प्रणिपत्यचेत्यन्ते

ध्यात्वा रहस्यत्रितयं तत्त्वयाथात्म्यदर्पणम् ।
परव्यूहादिकान् पत्युः प्रकारान् प्रणिधाय च ॥ १९ ॥

---

सन्दर्भे निबद्धः । गुरुपरम्परां शरणं गत्वेत्येतत् सदाचारानुप्रविष्ट-शरणागतिपरम्; 'तमाचारं प्रवक्ष्यामि यत्सद्भिरनुपाल्यते'--इत्युपक्रम्य, 'हित्वा योगमयीं निद्रामुत्थायापररात्रतः । प्रपद्ये तं हृषीकेशं शरणं श्रीपतिं हरिम्'--इत्युक्तत्वात् । सदाचारनिष्पत्त्यर्थो तु शरणागतिरत्र स्वाधिकारानुगुणं गुरुपरम्पराविषये प्रयुक्तेति भावः । यद्वा स्वाधिकारानुगुणं स्वाभिमतोपायभूता गुरुपरम्पराऽत्रानुसंहितेति भावः । 'प्रबुध्य सुचिरं दध्यौ परां गुरुपरम्पराम्'--इत्युक्तं काव्ये । परामित्यनेन तु 'पुत्रान् बन्धून् सखीन् गुरून्' इत्युक्तगुरुविशेषव्युदासः ॥ १४ ॥

ध्यात्वेति ॥ तत्त्वमात्मस्वरूपं, तस्य याथात्म्यं तदीयपर्यन्तमनन्यार्हशेषत्वानन्यशरणत्वानन्यार्हभोग्यत्वरूपाकारत्रितयम्, तस्य दर्पणं स्फुटावलोकनोपकरणम्; दर्पणो ह्यात्मदर्शन इति प्रसिद्धः, अतस्तत्त्वेन रूपणं कृतम् । रहस्यानां मूलमन्त्रमन्त्ररत्नचरमश्लोकानां त्रितयं, ध्यात्वा सार्थकमनुचिन्त्य । अत्र च--मूलमन्त्रस्य स्वरूपयाथात्म्यपरत्वमविवादम्; इतरयोरपि प्रपत्त्यनुष्ठानविधिपरत्वात्तस्याश्च स्वरूपयाथात्म्यज्ञानपर्यवसितत्वात्तत्परत्वमिति भावः । यथोक्तं पराशरेण--"सम्बन्धमपि विज्ञेयं निरुपाधित्वमीशितुः । अकारवाच्यस्य विभोर्हरेश्शेषमहं सदा । ममापि च न कर्तास्मि परवानव्ययस्य वै । नित्यं नारायणायैव कैङ्कर्यं करवाण्यहम् । मन्त्रार्थं चिन्तयेदेवं प्रातरुत्थाय सर्वदा । इत्थमात्मस्वरूपं तु ज्ञात्वा मन्त्रेण मन्त्रवित् ॥ स्वरूपमात्मनो ज्ञानं तद्वृत्तिं च द्वयेन वै । अखिलस्येश्वरा नित्या सर्वदा जगदाश्रया । नित्याऽनपायिनी विष्णोर्जगतामुपकारिणी । समासीनः श्रिया सार्धं गुणवान् परमेश्वरः । शरणं तस्य चरणौ प्रमाम्याकिञ्चन-

रसदा। आसीनाय श्रिया सार्धं हरये परमात्मने। तस्य चित्तानुरूपेण शेषवृत्तिं करोमि वै। इत्थं द्वयार्थं सञ्चिन्त्य स्वकर्मादिचतुष्टयम्। उपायभावात्सन्त्यज्य तमेव शरणं व्रजन्। कर्म कुर्यादशक्तस्सन् सन्तुष्ट्यै परमात्मनः''–इति॥ परव्यूहेत्यादि। परः परत्वं, भावप्रधानो निर्देशः, प्रकारानित्यनेन सामानाधिकरण्यात्; तच्च श्रीवैकुण्ठगद्यानुगृहीतं बोध्यम्; व्यूहः सङ्कर्षणादिरूपः, अयमपि भावप्रधानो निर्देशः, आदिपदेन रामकृष्णादिविभवावस्था हृदयपुण्डरीकेषु सविग्रहावस्थानरूपमात्मस्वरूपेष्वविग्रहावस्थानरूपं चान्तर्यामित्वं दिव्यार्षसैद्धमानुषादिभेदभिदुरमर्चारूपत्वमाचार्यत्वं च सङ्गृह्यते। परव्यूहादयो येषां ते तथोक्तास्तान्, शेषाद्विभाषेति कप्। प्रकारपञ्चकप्रकारषट्कोभयविवक्षयैव च सङ्ख्याविशेषो न निर्दिष्टः। तत्र प्रकारपञ्चकं प्रसिद्धम्। प्रकारषट्कं च–''मम स्वरूपं सर्वस्मात् परस्य जगदीशितुः। षड्विधं परिपूर्णं तत् सेनेश परिपठ्यते। परत्वं व्यूहविभवमन्तर्यामित्वमेव च। अर्चाचार्यावतारौ द्वौ षाड्विध्यं मे प्रकीर्तितम्''—इत्यत्र द्रष्टव्यम्। पत्युः–सर्वशेषिणः; अनेन 'हरौ स्वामीति बुद्धिमान्' इत्युक्तपारमैकान्त्यविशेषो व्यञ्जितः। प्रकारान्–अवस्थाविशेषान्, प्रणिधाय ध्यात्वा; तदुक्तं पराशरेण–'एवं वैकुण्ठनाथोऽसौ राजते परमे पदे। सेव्यमानस्सदा नित्यमुक्तैर्भोगपरायणैः। एवं सञ्चिन्तयेन्नित्यं परे व्योम्नि महेश्वरम्। तस्यैव व्यूहभेदाश्च विभवार्चादिमूर्तयः'–इत्युपक्रम्य, 'दर्शनार्थं दिवौकसाम्। लोकसंरक्षणार्थाय वैभवाय समागतम्। नृसिंहरामकृष्णादिविग्रहानपि चिन्तयेत्। देवतिर्यङ्मनुष्यादिचेतनेष्वपि संस्थितिः। तदन्तर्याम्यवस्था हि विष्णोस्सर्वगतस्य वै। स एव योगिहृदयपङ्कजे तु सविग्रहः। सौलभ्याय स सर्वेषामर्चायां नित्यसन्निधिः'—इति। चकारेण स्वशरीरचिन्तनं समुच्चीयते; यथोक्तं पराशरेण–'आत्मानं स्वशरीरं च परेशमनुचिन्त-

तत प्रत्युषसि स्नात्वा कृत्वा पौर्वाह्णिकी क्रिया ।
यतीन्द्रचरणद्वन्द्वप्रवणेनैव चेतसा ॥ १६ ॥

---

यन् । शुक्रशोणितसम्भूत शरीर पाञ्चभौतिकम्'–इत्यादि। 'त तु मद्भोगयोग्य तु कृपारूपप्रकाशनात् । नयामि परम स्थानमर्चिरादिगति विना। गरुडस्कन्धमारोप्य यथेष्टमनिवारित '–इत्येतदभिप्रेत्यार्चिरादिगतिस्मृतेरनुक्ति चकारेण वा सापि सङ्गृह्योति ध्येयम् ॥ १५ ॥

तत इति ॥ प्रणिपत्येति ल्यपैवानन्तर्ये लब्धेऽपि तत इत्युक्तिर्बुद्धिस्थ दन्तधावन तत्प्राक्तन शौचादिक च कृत्वेत्येतदर्थिका । तदाह पराशर –'प्रातरुत्थाय सतत शौच कृत्वा यथाविधि। प्रक्षाल्य पादौ हस्तौ च पश्चादाचमन चरेत्। तत स्नान प्रकुर्वीत दन्तधावन पूर्वकम्'–इति। अन्यत्राप्युक्तम्–"ब्राह्मे मुहूर्ते उत्थाय वसुरण्यो विभूरिति। अनेन परमात्मानं ध्यायेद्दहरहृद्दि ॥ तत आवश्यक कृत्वा पूर्वमादाय मृत्तिकाम्। शौच चतुर्गुण कुर्याद्विहिताद्ब्रह्मचारिण "–इति। विश्वामित्रश्च–'उष काले समुत्थाय शौच कृत्वा विधानत । दन्तकाष्ठमथाचम्य पर्वबर्ज्यमतन्द्रित । कृतस्नानो जपेत्तावद्यावदादित्यदर्शनम्'–इति। प्रत्युषसि स्नात्वेति–प्रत्युषसीति अरुणोदय उच्यते, तत्रैव यतीना स्नानोक्ते । यथा भविष्यत्पुराणे–'चतस्रो नाडिका प्रातररुणोदय उच्यते। यतीना स्नानकालस्तु गङ्गाम्बुसदृशस्स्मृत '– इति। स्कान्दगारुडयोश्च–' उदयात्प्राक् चतस्रस्तु नाडिका अरुणोदय । तत्र स्नान प्रशस्त स्यात् स हि पुण्यतमस्स्मृत "––इति। स्नात्वा स्नान कृत्वा: स्नानप्रकारश्च शाण्डिल्येनोक्त–"ध्यायन् देव पर ब्रह्म यथाशक्ति निमज्य च। चतुर्निमज्य विधिवत्"––इति। पूर्वाह्णे भवा पौर्वाह्णिक्य, ता; कालाट्ठञ्, अध्यात्मादित्वाद्वा। अह्न पूर्वो भाग पूर्वाह्ण, पूर्वापरेत्यादिनैकदेशिसमासे अहस्सर्वैकदेशेत्यादिना समासान्ते अह्नोऽह्न एतेभ्य इति अह्नादेश ; अह्नोऽदन्तादिति णत्वम्। अत्र

पूर्वाह्णशब्देन प्रातःकाल एव गृह्यते, पारिशेष्यात्, प्रकरणाच्च। क्रिया – वस्त्रग्रहणसन्ध्यावन्दनादिका, तदाह मेधातिथि —'ऊर्ध्वं जान्वोरधो नाभेः परिधार्यैकमम्बरम्। द्वितीयमन्तर्वासश्च परिधाय' –इति। अन्यत्राप्युक्तम्–"स्नात्वा चाचम्य विधिवत्तिष्ठन्नासीन एव वा। बिभ्रज्जलपवित्रं च अक्षसूत्रं करद्वये। तद्रूपवित्रैर्गोवाले कृते दुष्ट तनाशने। उदयाद्विनिवृत्तसन्ध्यामुपास्य त्रिरमल्पवत्। मित्रस्य चप णीत्याद्यैरुपस्थाय रविं त्रिभिः। प्रातस्साय चोपतिष्ठेत् वारुणीभिश्च पञ्चभिः"—इत्यादि। आचमनं च जलपवित्रेण कार्यम्, तदुक्तं –'आच मनादिषु पञ्चसु जलपवित्रस्य सम्बन्धः' – इति। गालवश्चाह–'सदा जलपवित्रेण मार्जनाचामतर्पणम्' इति। ऊर्ध्वपुण्ड्रकाषायकौशेयपवित्र पद्माक्षतुलसीमालायज्ञोपवीतादिषु प्रमाणान्यपोद्धातविभाग एव लिखि- तानि। यतीन्द्रेत्यादि–यतीन्द्रचरणद्वन्द्वप्रवणेन भगवद्रामानुजपादयुग विषयपरमभक्तिपूर्णेन, वनसनसम्भक्ताविति धातुपाठः, सम्भक्तिः प्रीतिः, यद्वा प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यत्रेव प्रवणशब्दोऽवनतस्थलवाची। यतीन्द्रचरणद्वन्द्वं प्रवणं यस्य तत्तथोक्तम्, तथाविधेन, अवनतस्थले हि सलिलादेरनिर्गमनमन्यतोनिर्गमनविरहश्च दृष्टमिति भावः। चरणद्वन्द्वस्य प्रवणेन निम्नस्थलेन, यतीन्द्रचरणद्वन्द्वं हि निहतुव मेवागागम्यान्यतो न निर्गच्छतीति वाऽर्थः, चरणद्वन्द्वे अवनतेनेति वाऽर्थः, 'प्रवणं क्रमनिम्नोर्व्यां प्रवाहेन' इति कोशः। यद्वा वनुचनो च्यत इति धातुपाठात् क्रियासामान्यवाचिनो वनतेः प्रपूर्वात् पचाद्यचि निष्पन्नः प्रवणशब्दः क्रियासामान्यकर्तृवचनः, तथा च–यतीन्द्र चरणोद्देश्यकक्रियासामान्यपरेणेत्यर्थः। एवकारश्च करणिनो यतीन्द्र- प्रवणसमाख्यासिद्धयतीन्द्रप्रावण्यानुबन्धनिबन्धना चेतसस्तत्प्रावण्य प्रसिद्धिं द्योतयति, स्वाधिकारविरुद्धप्रथमपर्वप्रावण्यं वा स्वातन्त्र्येण प्रतिषेधति। चेतसा मनसा, करणेन कृत्वेति पूर्वेणान्वयः, मध्यमाणि-

अथ रङ्गनिधिं सम्यगभिगम्य निजं प्रभुम् ।
श्रीनिधानं शनैस्तस्य शोधयित्वा पदद्वयम् ॥ १७ ॥

---

न्यायादुत्तरत्रापि सर्वत्रान्वयः । 'तदधीनश्च वर्तेत साक्षान्नारायणो हि सः । यच्च कर्म तदर्थं तद्विष्णोराराधनात्परम् । अपदिश्य पितॄन् देवान् गुरौ यत्प्रतिपाद्यते । देशकालक्रियामन्त्रनिरपेक्षं तदक्षयम्'—इति भरद्वाजोक्तं; आचार्यनिष्ठानामाचार्यरूपभगवन्मुखोल्लासोद्देशेनैव नित्यनैमित्तिकादिकैङ्कर्यकरणं स्वाधिकारानुगुणमित्यवगम्यते । अत एव ह्यान्ध्रपूर्णव्याजेन श्रीवत्सचिह्नमिश्रैः भगवद्भाष्यकाराङ्घ्रैराह्निकमाचार्यनिष्ठाधिकारिकर्तव्यनित्यनैमित्तिकाद्यनुष्ठानप्रकारप्रतिपादकं प्रणीतम्; एतच्च श्रीपाञ्चरात्ररक्षायां स्पष्टम् । यद्वा—यतीन्द्रेत्यादिना भगवद्रामानुजदिव्याज्ञयैव नित्यनैमित्तिकाद्यनुष्ठानमित्युच्यते; तदुक्तं काव्ये- "आत्मस्वरूपयाथात्म्यमाचार्याधीनतैव यत् । आम्नायानां रहस्यं तदखिलेभ्यः प्रकाशयन् । सर्वं यतिपतेरेव कुर्वन्नादेशपूर्वकम् । कृत्याकृत्येषु कर्तृत्वं कृती किमपि नास्पृशत्"—इति ॥ १६ ॥

अथेति ॥ अथ—कावेरीसकाशाच्चन्द्रपुष्करिणीसकाशादन्यस्माद्वा स्नानदेशान्मठागमनानन्तरं, निजं प्रभुं—स्वात्मत्वेन सन्निहितं सर्वनियन्तारम्; रङ्गनिधिं—रङ्गस्य निधिं, निधिमिवानवधिकैश्वर्यनिदानं भगवन्तं; सम्यगभिगम्य—यथाशास्त्रं प्रेमपुरस्सरं चाभिगम्य; श्रीनिधानं— "'श्रीमन्तौ हरिचरणौ समाश्रितोऽहम्' इत्युक्तरीत्या श्रियो निधानं निवासभूतम्; तस्य रङ्गनिधेः, पदद्वयमङ्घ्रियुग्मम्; शनैः—भक्तिभूम्ना त्वरणासमर्थस्सन्; शनैरित्यत्र च—'अत्वरस्सुमनाः क्रोधं कामं हित्वा यजेत च' इति शाण्डिल्यवचनमप्यभिप्रेतम् । शोधयित्वा—स्नापयित्वा; प्रातःकालिकस्नानाद्यनन्तरमभिगमनं हि स्मृतिसिद्धम्; तदाह शाण्डिल्यः—'सहाभिगमनेनैव प्रातःकालानुयायिना । वक्ष्यामि योगादूर्ध्वं यत्

ततस्तत्सन्निधिस्तम्भमूलभूतलभूषणम् ।
प्राङ्मुखं सुखमासीनं प्रसादमधुरस्मितम् ॥ १८ ॥

कर्तव्यं स्नानपूर्वकम्'–इत्युपक्रम्य स्नानादिप्रकारान् विस्तरेणोक्त्वा, 'अभिगच्छेच्च देवेशं सुस्नातस्सोर्ध्वपुण्ड्रकः। सुप्रक्षालितपादश्च स्वाचान्तस्संयतेन्द्रियः। सन्ध्ययोरुभयोर्नित्यं यावदर्कर्क्षदर्शनम्। ध्यायन् ब्रह्म जपेन्मौनी ततोऽभिगमनक्रिया'–इति। प्रभुमित्यत्र च–'स्वामित्वेन सुहृत्त्वेन गुरुत्वेन च सर्वदा। पितृत्वेन तथा भाव्यो मातृत्वेन च माधवः'–इति शाण्डिल्यवचनमभिसंहितम्। निजमिति स्वार्चारूपत्वमभिप्रेतम्; तदुक्तं काव्ये–'अभिगम्य क्रमात् स्वीयमर्चयामास माधवम्। तत्संश्लेषाभिलाषेण रङ्गधामा परः पुमान्। तद्गृहार्चात्मना तत्र सन्निधिं विदधे सदा'–इति। पदद्वयं शोधयित्वेति पाद्यप्रदानमाराधनस्य प्रदर्शनार्थं, अर्चयामासेति काव्ये समानप्रकरणे स्थितत्वात्; शाण्डिल्येनाप्युक्तम्–'जप्त्वाभिगमनं मन्त्रमर्चयित्वा यथाविधि। आसनार्घ्यादिभिर्भोगैर्भक्त्या परमपावनैः। अभिगम्य जगन्नाथं ध्यायन्नेव सनातनम्'–इति। अत्र यतीन्द्रचरणद्वन्द्वेत्यादिकमधिक्रियते, तेन स्वोद्देश्ययतीन्द्रोद्देश्यत्वेन रूपेण रङ्गनिधेराराध्यत्वं लब्धं, अतो न स्वाधिकारविरोधः; यथोक्तम्–'नाहं स्वपिमि जागर्मि तमेवार्थं विचिन्तयन्। इत्येवमवदद्भ्राता शत्रुघ्नो भरतप्रियः'–इत्यादि ॥ १७ ॥

तत इति ॥ ततः बुद्धिस्थान्मन्त्ररत्नादिजपादनन्तरम्, तस्य रङ्गनिधेः, सन्निधेरायतनस्य, स्तम्भस्य, मूलस्य, भुवः, तलस्य भूषणमलङ्कर्तारम्; अत्र षडपि षष्ठ्योऽधिकरणे षष्ठ्यः। प्राङ्मुखं सुखमासीनं उपविष्टं, प्राङ्मुखमिति क्रियाविशेषणं कर्तृविशेषणं वा। प्रसादेन सन्तोषादिप्रयुक्तमनोनैर्मल्यविशेषेण, मधुरं प्रियं स्मितं मन्दहासो यस्य स तथोक्तस्तम्। आराधनानन्तरं मन्त्ररत्नजपः पराशरेणोक्तः–'कालत्रया-

भृत्यैः प्रियहितैकाग्रैः प्रेमपूर्वमुपासितम् ।
तत्प्रार्थनानुसारेण संस्कारान् संविधाय मे ॥ १९ ॥

---

र्चनान्ते तु जपेदष्टसहस्रकम् । अष्टोत्तरशतं वाऽपि अष्टाविंशतिमेव वा। यथाशक्ति जपेन्नित्यं मन्त्ररत्नमतन्द्रितः। तदर्थं चिन्तयेन्नित्यं यावद्देहनिपातनम्'-इति। शाण्डिल्येनाप्युक्तं-'आमुहूर्तात्तु वै ब्राह्माद्न्यूनं प्रहरात्सुधीः। स्नानार्चनजपस्तोत्रपाठैः कालं विनोदयेत्'—इति। अत्रापि यतीन्द्रचरणद्वन्द्वेत्यादिकमनुवर्तते। तेन जपासनादिसर्वावस्थासु स्वाधिकारानुरूप्येण स्वाचार्यस्मृतिरुक्ता भवति। प्राङ्मुखत्वं जपादिषु शाण्डिल्येनोक्तम्-'आचार्यमेकभक्तं च भगवन्मन्दिरं जलम्। अग्निमर्कं च सोमं च पृष्ठीकृत्य जपेन्न च' इत्युपक्रम्य, 'उदङ्मुखः प्राङ्मुखो वा कुर्याद्भागवतः क्रियाः'-इति ॥ १८ ॥

भृत्यैरिति॥ प्रियेति-प्रियमिष्टं, हितं पथ्यं, तयोरेकाग्रैः एकचित्तैः; एतेन भगवदाराधनोपयुक्तवर्णाश्रमाविरुद्धवस्तूपादानादिमुखेन प्रियहितपरत्वमुक्तं भवति। तदुक्तं यतिधर्मसमुच्चये-'फलपुष्पोत्पाटने प्रायश्चित्तविधानादद्भिः कर्तव्यमन्याहृतैर्वा'-इति। 'सिद्धमन्नं भक्तजनैरानीतं यन्मठं प्रति। उपपन्नं तदित्याहुर्मुनयो मोक्षकाङ्क्षिणः' इत्येतत् तुल्यन्यायेन भगवदाराधनार्थं भक्तजनसन्निधापिततण्डुलशाकादिकमप्युपयुज्यमित्यभिप्रैति। देशकालवैगुण्यादिसमीक्षया भिक्षामसंमन्यमानगुरुवचनेन चैकान्नभोजनं सांप्रदायिकं, तन्मूलं च-'अष्टौ तान्यव्रतघ्नानि आपो मूलं घृतं पयः। हविर्ब्राह्मणकामाय गुरोर्वचनमौषधम्'-इत्यादिवचनम्; विशेषतश्च-'तदीयाराधने रतिः' इत्यादि स्मर्यते। पराशरसंहितायां च-'माठापत्यं यतिः कुर्याद्विष्णुधर्माभिवृद्धये'-'धनधान्यादिसङ्ग्रहम्'-इत्यादिकमुच्यते। पद्मसंहितायां च-'मठिमित्ताद्याधिपत्यं यतीनां मोक्षकारणम्'-इत्युक्तम्। अतो यथा सम्प्रदायं

भक्तोपनीतभगवदाराधनोपयुक्तद्रव्यसम्पत्त्या उपादानकार्यसिद्धिरविरुद्धा। यद्वा—स्वायत्ताचार्यप्रियतदायत्तस्वहिततदुभयपरैर्भृत्यैर्वाधूलवरदनारायणगुरुप्रभृतिभि , प्रेमपूर्व स्नेहपूर्व, उपासित परिचरित, परिचरण च—पूर्वोक्तमास्पर्शिकादिद्रव्यसन्निधापनादिरूप गुरुमन्त्रदेवतापरिभवविरहेण ज्ञानव्यवसायप्रेमसमाचारसमवायेन चाचार्यप्रीतिसवर्धनरूप च, तेषा प्रियहितपरभृत्याना प्रार्थनाया अनतिक्रमणीयाया यान्नाया अनुसारादनुरोद्धव्यत्वाद्धेतो , मे पूर्वैर्गुरुभिरेवोपसन्नस्य मम, सस्कारान् तापादीन्, सविधाय कृत्वा , इद चाभिषेचनेऽस्त्विति। अत्र च—'सवत्सरमुपासीत तमेव सुसमाहित । उपासीत गुरोर्वर्षम्'—इत्यादिना सवत्सरपरीक्षितस्यैव सस्काराणा कर्तव्यत्वोक्तावपि तत्प्रार्थनानुसारेणेति सवत्सर तदधिक च काल परीक्षिताना हितपराणा भृत्याना प्रार्थनावशात् पूर्वैर्गुरुभिरागतस्याप्यस्य सस्कारयोजन नानुपपन्नम्। शोधयित्वा पदद्वयमित्युक्तमाराधन च तापादिसस्कारेषु प्रसङ्गादुपकरोति, तेषा हि भगवदर्चनमङ्गम्, तदुक्त पराशरेण—'स्नात्वा शुभेऽह्नि पूर्वाह्णे सम्यगभ्यर्च्य केशवम्। स्नात शिष्य समाहूय कृतकौतुकबन्धनम्। आचार्यो विधिवत्कुर्याच्चक्रपुण्ड्रादिसत्क्रियाम्'—इति। 'न कालस्य परीक्षास्ति' इत्यादिना च 'स एव देश कालश्च' इत्याद्युपष्टम्भेन शुभकालप्रतीक्षणानपेक्षा बोधिता। सस्कारानिति बहुत्व कपिञ्जलाधिकरणन्यायात् त्रित्वे पर्यवस्यति, तथा च—तापपुण्ड्रनामरूपान्त्रीन् कृत्वेति लब्धम्, मन्त्रस्योत्तरश्लोकद्वयेन वक्ष्यमाणत्वात्, यागस्तु यथाधिकारस्वीयपादुकाद्वयादिप्रसादनापदेशेन कालान्तरे करिष्यत इति बोध्यम्। सविधायेत्यत्र समित्येकशरीरे एकदैव विधायेत्यर्थ । उक्त च भरद्वाजपरिशिष्टे—'सहैकदिवसे वा द्वे त्रीणि चत्वारि पञ्च च'—इति। अग्निकार्य चान्येन कार्यं, यतीनामग्निकार्यनिषेधात्, उक्त हि तत्रैव—'आचार्यस्स्वयमादाय नियुक्तो वाऽथ मन्त्रवित्। प्राङ्मुखस्योपविष्टस्य

अनुकम्पापरीवाहैरभिषेचनपूर्वकम् ।
दिव्यं पदद्वयं दत्वा दीर्घं प्रणमतो मम ॥ २० ॥

न्यसेद्वाहौ तु दक्षिणे'—इति । यद्येवं प्रधानस्यैवाचार्यनियुक्तेनान्येन करणं तदाऽङ्गमात्रस्यान्येन करणमनुक्तसिद्धं; 'न शिष्याननुबध्नीत'—इत्यादिनिषेधस्तु विशिष्टप्रार्थनाविरहविषय इति भावः ॥ १९ ॥

अनुकम्पेति ॥ अनुकम्पायाः परदुःखासहिष्णुत्वलक्षणकृपायाः, परीवाहैरधिकप्रवाहैः करणैः, अभिषेचनं स्नपनं पूर्वं यस्मिन् कर्मणि तत्तथोक्तं; इदं दानेऽन्वेति, पूर्वोक्तसंस्कारसंविधानं त्वभिषेचनेऽन्वेति। दीर्घं प्रणमतो मम—मन्नाभिमानतावशात् भक्त्यतिशयाच्च चिरं दण्डप्रणामं कुर्वतो मे, दिव्यं भगवच्चरणापेक्षयाऽपि प्रकृष्टं, पदद्वयं श्रीपादयुगलं, दत्वा शिरसि कृत्वा, साक्षात्फले उपदेशक्रियोद्देश्ये स्वशिक्षितशिष्यनिष्ठभगवन्मङ्गलाशासनफलोपायकत्वरूपफले, या एकलक्ष्यत्वप्रतिपत्तिः अद्वितीयोद्देश्यत्वप्रकारिका बुद्धिः, तया पवित्रितं यथा तथा, मन्त्ररत्नं द्वयं, प्रयच्छन्तमुपदिशन्तं, वरवरमुनिं, वन्दे नौमि। अत्रापि यतीन्द्रचरणद्वन्द्वेत्यादिकं वर्तते, तेन उपदेशसमये स्वस्मिन् यतीन्द्रकरणत्वानुसन्धानं लब्धं, इदं गुरुपरम्परानुसन्धानप्रदर्शनार्थमपि भवति, मध्यग्रहणे पार्श्वद्वयस्यापि ग्रहणात् । यतीन्द्रो हि गुरुपङ्क्तिहारनायकः। प्रधाने कृतं कार्यं हि सर्वत्रकृतं भवति; 'शिष्टं श्रीमद्गुरूणां कुलमिदमखिलं तस्य नाथस्य शेषः'—इति ह्युक्तम्। कृपयोपदेशः शाण्डिल्येनोक्तः—'संवत्सरं तदर्धं वा मासत्रयमथापि वा । परीक्ष्य विविधोपायैः कृपया निस्पृहो वदेत्'—इति । विविधोपायैरित्यत्र परीक्षितरतां प्रार्थनाऽप्यन्तर्भवति। पराशरेणाप्युक्तम्—'कृपया बोधयेद्गुरुः । स्वाचार्यं हृदये ध्यात्वा जप्त्वा गुरुपरम्पराम्', 'आचार्यः कृपया स्वयम् । स्वाचार्यं हृदये ध्यात्वा मन्त्रमध्यापयेद्गुरुः। न्यासाख्यं

साक्षात्फलैकलक्ष्यत्वप्रतिपत्तिपवित्रितम् ।
मन्त्ररत्नं प्रयच्छन्तं वन्दे वरवरं मुनिम् ॥ २१ ॥

परमं मन्त्रं संसारोच्छेदनं शुभम्'—इति । द्वयानुसन्धानं हि गुरुपरम्परानुसन्धानपूर्वकमिति 'जप्त्वा गुरुपरम्पराम्'-इत्यनेन लभ्यते। यद्यपि-शिष्यसङ्ग्रहो यतीनां बन्धहेतुः; यथोक्तं-'आसनं पात्रलोपश्च सञ्चयश्शिष्यसङ्ग्रहः। दिवास्वापो वृथाजल्प एते षड्बन्धकारिणः'—इति; तथाऽपि कृपया शिष्यं प्रत्युपदेशो यतीनामविरुद्धः; तदुक्तं—'शुश्रूषालाभपूजार्थं यशोऽर्थं वा परिग्रहः। शिष्याणां न तु कारुण्यात् स ज्ञेयश्शिष्यसङ्ग्रहः'-इति। वैष्णवानां तु यतीनामुपदेशो विशेषशास्त्रासिद्धः; तदाह शाण्डिल्यः-'ब्रह्मचारी गृहस्थश्च वानप्रस्थो यतिस्तथा। कृपयाऽऽश्रमिणस्सर्वे धर्मं ब्रूयुस्त्वलिङ्गिने। गृहस्थो वाऽपि सर्वेभ्यो धर्मं ब्रूयान्महामतिः। परिव्राडपि वा ब्रूयात्'-इति ॥ तदिदमनुकम्पापरीवाहैरित्यनेन व्यञ्जितम्। अभिषेचनपूर्वकं दिव्यं पदद्वयं दत्वा मन्त्ररत्नं प्रयच्छन्तमिति स्नानमाल्यभूषणप्रदानशैली व्यज्यते। दीर्घं प्रणमत इत्यत्र-'नमस्कृत्य गुरुं दीर्घं प्रणामैस्त्रिभिरादृतः। तत्पादौ गृह्य मूर्ध्नि स्वे निधाय विनयान्वितः। गृह्णीयान्मन्त्रराजानं मां गच्छेच्छरणं नरः'-इति। मन्त्रान्तरेपूक्तमत्रापेक्षितमतिदिश्यत इति ध्वनितम्। दीर्घं प्रणमत इत्यत्र प्रणामैकत्वं स्वरसतोऽवगम्यते; तन्मूलं तु-'एकोऽपि कृष्णस्य सकृत्प्रणामः', 'ये प्रणामांस्तु सुबहून् कारयन्त्यविचक्षणाः'-इत्यादिकं वचनम्। साक्षात्फलेत्यत्र साक्षात्पदमुद्देश्यतात्मकमुख्यतामाह-साक्षात्प्रत्यक्षमुख्ययोरिति ह्यभिधानकोशः, एकपदेन चार्थशुश्रूषादिदृष्टप्रयोजनं शिष्यस्वरूपोज्जीवनं शिष्यस्वरूपशिक्षणप्रयुक्तभगवत्कैङ्कर्यं अनुकूलसहवाससिद्धिश्चेत्येषां चतुर्णामनुद्देश्यत्वमुच्यते; अनुद्दिष्टानामपि तेषां सिद्धिस्तु

ततस्सार्धं विनिर्गत्य भृत्यैर्नित्यानपायिभिः ।
श्रीरङ्गमङ्गलं द्रष्टुं पुरुषं भुजगेशयम् ॥ २२ ॥

---

शिष्येश्वरस्त्वाचार्याणामभिसन्धिभिरिति च सूच्यते । अत्र च ऋष्यादीनामनुक्तिः—"विनाऽपि न्यासमुद्रार्षतत्त्वर्षिच्छन्ददैवतम् । उच्चारणे मनोरस्य सर्वसिद्धिफलं भवेत्"—इति पराशरवचनमभिप्रेत्येति बोध्यम् ॥ अन्यत्राप्युक्तम्—"नमोऽन्तं मन्त्ररत्नं च जपेयुर्वैष्णवास्सदा । ऋष्यादींश्च करन्यासमङ्गन्यासं च वर्जयेत् ॥ नारी वा वृषलो वाऽपि गुरुवन्दनपूर्वकम् । स्त्रीणां च सर्ववर्णानां पुरुषाणां तथा विदुः । एवं ध्यात्वा द्विजश्रेष्ठो द्वयं नित्यमतन्द्रितः । श्रीमन्नारायणं ध्यात्वा जपेत्तं पुरुषोत्तमम्"—इति । पराशरवचने तत्त्वर्षिच्छन्ददैवतमित्यत्र च्छन्दशब्दे सकारलोपस्त्वार्षः । अत्र चोपादानविधिर्यथाऽधिकारमनुष्ठितो भवतीत्युक्तं भवति ; भगवद्भोगद्रव्यसम्पादनं ह्युपादानम्, तच्चाचेतनस्य पुष्पादेरिव चेतनस्यापि सम्पादनरूपमिति युक्तम् । तथोक्तं भरद्वाजपरिशिष्टे—"अन्येषां चैव भोगानां चेतनाचेतनात्मनां । निष्पादनं रक्षणं च संस्क्रियोपनयादि च । भक्त्या च नियता साङ्गा स्वयमाराधनक्रिया । इत्येतत्सकलं काण्डस्कन्धशाखादलाङ्कुरम्"—इति ॥ २१ ॥

तत इति ॥ ततः मन्त्ररत्नप्रदानानन्तरं, श्रीरङ्गस्य—अनन्याधेयातिशयस्यापि रङ्गनगरस्य श्रीर्ह्यनन्याधेयातिशया भवति, अतस्तत्त्वेन रूपणं कृतम् । मङ्गलं अलङ्कारभूतं, भुजगेशयमनन्तशायिनं, पुरुषं—सर्वकारणभूतं सर्वान्तर्यामिणं सर्वापेक्षितप्रदं भगवन्तं, द्रष्टुं साक्षात्कर्तुं ; अस्य च विनिर्गत्येत्यनेनान्वयः । नित्यानपायिभिः—नियतो यो विश्लेषाभावस्तद्वद्भिः, अतिशायने मतुबादयः इति इनिप्रत्ययः ; नातो न कर्मधारयादिति निषेधः । अतिशयश्च छाया या सत्त्वमनुगच्छेदित्युक्त-

महति श्रीमति द्वारे गोपुरं चतुराननम्।

च्छायापेक्षया ; सा हि रात्रौ न भवति, एतेनात्यन्तभक्तिरुक्ता भवति। भृत्यैस्सार्धं क्रयविक्रयार्हैर्वाधूलवरदाचार्यप्रभृतिभिस्सह, निर्गत्य स्वमठादिति शेषः। अत्रापि यतीन्द्रचरणद्वन्द्वेत्यादिकं वर्तते, तेन स्वोद्देश्ययतीन्द्रमुखोल्लासहेतुतया श्रीरङ्गनाथदर्शनमिति लभ्यते; तदुक्तं काव्ये—'सर्वं यतिपतेरेव कुर्वन्नादेशपूर्वकम्'—इत्युपक्रम्य, 'ततस्तस्य मुखोल्लासं चिकीर्षन्नेव केवलम्। निर्जगाम जगद्धाम निद्राणं द्रष्टुमच्युतम्'—इति। नित्यानपायिभिरित्येतदपि तत्रैव स्फुटीकृतम्—'गच्छन्तमन्वगच्छंस्तं गरीयांसं गुणैश्शुभैः। तदीयास्तत्पदद्वन्द्वच्छायादायादवृत्तयः'—इति। एतेन छायाया दुस्त्यजत्वात् तत्स्थानीयानां सहवाससहगतागतादिकं न दुष्यतीत्युक्तं भवति; तथा च—"एको भिक्षुर्यथोक्तस्तु तावेव मिथुनं स्मृतम्। त्रयो ग्रामास्समाख्याता ऊर्ध्वं तु नगरं यतेः। नगरं तु न कर्तव्यं ग्रामो वा मिथुनं तु वा। एतत्त्रयं प्रकुर्वाणस्स्वधर्मात् च्यवते यतिः"—इत्येतत् 'स्नेहपैशुन्यमात्सर्यं सन्निकर्षाद्भविष्यति'—इतिवाक्यशेषानुसारात् तथाविधानां सन्निकर्षपरं, न तु बोधयन्तः परस्परमित्युक्तानुकूलसहवासनिषेधकमिति भावः। अत्र च—'प्रभुं भक्तपराधीनं नित्यमालोकयेद्धरिम्। विमानमथवा तस्य दूराद्गोपुरमेव वा' इति भरद्वाजसंहितोक्तेः पञ्चस्वपि कालेषु यत्रावकाशोऽस्ति तत्र दिव्यालयगमनं स्वार्च्यभगवदभिगमनात्पृथगेव कार्यमित्यवगम्यत इति तदेव ततस्सार्धं विनिर्गत्येत्यादिनोच्यते; क्वचित्तु—भगवदायतनस्य तीर्थासन्नत्वे स्वगृहार्चाभूतभगवदभिगमनात्पूर्वमेव दिव्यालयगमनं कर्तव्यम् ; यथोक्तं—'उपस्थायाघारशक्त्यादीन् संतर्प्य निपीड्य च। वस्त्रं ब्रह्ममुखं कृत्वाऽऽनम्य तीर्थोदगं हरिम्। गृहं गत्वाऽभ्युदय हुत्वाऽभिगम्य कमलापतिम्'—इति ॥ २२ ॥

प्रणिपत्य शनैरन्तः प्रविशन्तं भजामि तम् ॥ २३ ॥
देवी गोदा यतिपतिशठद्वेषिणौ रङ्गशृङ्गं
सेनानाथो विहगऋषभश्श्रीनिधिस्सिन्धुकन्या ।

---

महतीति ॥ श्रीमति–ब्रह्मादीनामपि सकृत्स्वस्मिन् प्रवेशमात्रेण सर्वैश्वर्यनियामकैश्वर्यभूयिष्ठे, महति–सर्वात्मसाधारणनाथगोष्ठीपूरेऽपि दुष्पूरमहावकाशे, द्वारे दिव्यालयप्रतीहारे, चतुराननं चतुर्मुखसंज्ञं, गोपुरं विमानं; अत्र गोपुरशब्दस्तदुपरिस्थितविमानपरः, प्रणिपत्य मनोवाक्कायैर्नमस्कृत्य; 'श्रीमद्वारं महत्प्राप्य नाम ध्यायन्नमस्यया'–इति हि काव्ये । शनैर्मन्दं–तदीयकनककवाटकामनीयककवलितं कथमपि चक्षुराकृष्येति भावः । अन्तः अभ्यन्तरं, प्रविशन्तं तं वरवरमुनिं, भजामि सेवे । तिष्ठतु गोपुरादिकं, प्रासशेषिसमृद्धिसाक्षात्कारसम्प्रीतिरेवास्य मन्मनः क्रीणातीति भावः । उक्तं च भरद्वाजसंहितायाम्– 'उपेत्यायतनं विष्णोः प्रणिपत्य ततस्ततः । परीत्य देवदेवेशं प्रणम्यात्मानमर्पयेत्'–इति । अत्र प्रणिपत्य ततस्ततः इति विमानमण्डपादिविषयेषु तत्तन्नामभिर्नमस्योच्यते । प्रणिपत्यशनैरन्तरित्यत्र च प्रणिपत्येति निर्देशो भरद्वाजवचनप्रत्यभिज्ञानार्थः ॥ २३ ॥

अयं श्लोकश्शतकस्यस्सेवाक्रमबोधकोऽत्रापि निबद्धः । देवी–तुलसीमूलसञ्जातत्वादतिरोहिताप्राकृतस्वभावा, गोदा–भट्टनाथसुता, यतिपतिर्भगवान् रामानुजः, शठद्वेषी पराङ्कुशः, तौ, रङ्गशृङ्गं श्रीरङ्गविमानं, पर्वताग्रवाचिना शृङ्गशब्देन तद्वदुन्नतस्थिरविपुलं विमानमुच्यते । सेनानाथो विष्वक्सेनः, विहगानां पक्षिणां ऋषभः परिवृढो गरुत्मान्, श्रीनिधिः श्रीरङ्गनाथः, सिन्धुकन्या श्रीरङ्गराजमहिषी । भूर्भूदेवी, मा–श्रीदेवी, नीला नीलादेवी, गुरुजनाः पराङ्कुशाद्याः प्रथमे पुमांसः, तैः वृतः–परिगतः पूरुषः परमपदनाथश्चेत्यमीपामग्रे धुरि

भूमानीलागुरुजनवृतः पूर्णपश्चेत्यमीपा-
मग्रे नित्यं वरवरमुनेरङ्घ्रियुग्मं प्रपद्ये ॥ २४ ॥

मङ्गलाशासनं कृत्वा तत्र तत्र यथोचितम् ।
धाम्नस्तस्माद्विनिष्क्रम्य प्रविश्य स्वं निकेतनम् ॥ २५ ॥

---

वरवरमुनेरङ्घ्रियुग्मं नित्यं प्रपद्ये। अत्र नित्यमित्यनेन परेद्युरित्येतत्सर्वदिनप्रदर्शनार्थमित्युक्तं भवति। स्वोद्देश्यभूतवरवरमुनिचरणयुगलापेक्षया प्रथममध्यमपर्वभूतेषु गोदादिपुरुषान्तेषु स्वातन्त्र्येण स्वमनःप्रवृत्तेर्वारणायेयं स्वाधिकारानुगुणा देवराजगुरोर्वरवरमुनिचरणारविन्दशरणागतिरिति नाचार्यप्राप्त्यर्थसन्निपातेत्यादिनाऽस्य विरोधः। अनेन सेवाक्रमविशेषेण प्रदक्षिणस्य सिद्धेः 'परीत्य देवदेवेशम्' इति वचनार्थोऽप्यनुष्ठितो भवति । देवी गोदेत्यादिके विहगवृषभ इत्यन्ते गुरुजनवृत इत्यत्र च—'परिवारांश्च सेवेत भक्त्या परमया हरेः। तत्तद्दर्शागतान् भक्तान् गुर्वादींश्च विशेषत.' इति भरद्वाजवचनमभिसंहितम्। गोदा हि—भक्तेषु गुरुषु चान्तर्भवति; 'अहं शिष्या च दासी च भक्ता च पुरुषोत्तम' इति भूम्युक्तेः। अत्र च—अमीपामिति नपुंसकलिङ्गं; तेन स्त्रीपुन्नपुंसकानां महोक्तौ नपुंसकशेषेऽपि न क्षतिः ॥ २४ ॥

मङ्गलाशासनमिति॥ तत्र तत्र गोदादिपुरुषान्तेषु विषयेषु मङ्गलाशासनं प्रेमान्ध्यात् विद्यमानामङ्गलनिवृत्तिप्रार्थनां अविद्यमानमङ्गलसम्पत्तिप्रार्थनां च, यथोचितं तत्तद्विषयानुरूपं, चरमनिष्ठाविशेषनिष्ठस्वाधिकारानुरूपं च कृत्वा; तस्माद्धाम्नः भगवद्दिव्यालयात्, विनिष्क्रम्य विनिर्गत्य; स्वं श्रीरङ्गनाथानुज्ञालब्धत्वेन स्वीयतया लोकैः प्रतिपाद्यमानं निकेतनं स्थानं, प्रविश्य प्राप्य। अत्र परिपूर्णविषयेऽपि मङ्गलाशासनकरणे प्रमाणोपपत्तिसम्प्रदायविस्तरः पूर्वाचार्यदिव्यसूक्तिष्वनुसन्धेयः। 'सर्वत्र दृष्ट्वा देवेशं जितं त इति मन्त्रकम्' इति शाण्डिल्यवचनमिहा-

अथ श्रीशैलनाथार्यनाम्नि श्रीमति मण्डपे ।
तदङ्घ्रिपङ्कजद्वन्द्वच्छायामध्यनिवासिनम् ॥ २६ ॥

भिप्रेतम् ॥ जितमित्यस्य हि मङ्गलाशासनपर्यवसानं पूर्वैर्निर्व्यूढम्। अत्र च भगवन्निर्देशेन निकेतनविशेषवासो न दुष्यति। अनग्निरनिकेतस्स्यादित्यादिकं तु भगवन्निर्देशादिविशेषनिदानाभावे निकेतनविशेषं निषेधतीत्यभिप्रायेण स्वंनिकेतनमिति निर्दिष्टम्। पात्रस्तरमाद्विनिष्क्रम्येत्येतच्च भगवद्विश्लेषासहिष्णुतयाऽतिकृच्छ्राद्विर्गमनमभिप्रैति। 'प्रीतिसंहृष्टसर्वाङ्गः स्तुत्वा चाभिविलोकयन्' इति च भरद्वाजेनोक्तम् ॥ २१ ॥

अथेति ॥ प्रविश्येति स्यपैवोत्तरकाले बोधितेऽप्यथेत्युक्तिर्बुद्धिस्थं यतीन्द्राय वृत्तनिवेदनं कृत्वेत्यार्थिका; तदुक्तं काव्ये—'उपेत्य पुनरप्येष निजमेव निवेशनम्। निवेद्य निखिलं तत्र यतीन्द्राय नमस्यया'—इति ॥ श्रीशैलनाथार्यस्य स्वाचार्यस्य नाम यस्य स तथोक्तस्तस्मिन्, (तिरुमलैयाव्वार्) इति हि तन्नाम; श्रीशैलनाथार्येति नाम यस्येति व्याख्याने तु तदङ्घ्रीत्यत्र तच्छब्देन श्रीशैलनाथार्यस्य परामर्शः क्लिष्टश्च स्यात्। श्रीमति—भगवल्लोकगुर्वादिपूर्वाचार्यदिव्यायतननिवेशक्षेत्रगतदिव्यमृत्स्नालेपेन समधिकसौभाग्ययुक्ते, मण्डपे जनाश्रये; तस्य श्रीशैलनाथार्यस्य स्वाचार्यस्याङ्घ्रिपङ्कजयोः पद्मसदृशचरणयोर्द्वन्द्वस्य युगलस्य, द्वन्द्वेति साहित्यसौन्दर्यं छायावैपुल्यं च लभ्यते; छायाया अनातपस्य मध्ये अन्तरालदेशे, निवसतीति निवासी, सुप्यजातौ णिनिस्ताच्छील्ये इति णिनिः, तथाविधम्। इदं च तथा भावनाभिप्रायेणोक्तम्; आलेख्यरूपेण सन्निहितस्य स्वाचार्यस्य श्रीशैलनाथार्यस्य अङ्घ्रिपङ्कजद्वन्द्वस्याधस्तान्निवासाभिप्रायेण वेदमुक्तम्। अत्र चाचार्यपारतन्त्र्यस्य परा काष्ठा प्रकाशिता भवति। उक्तं च भरद्वाजपरिशिष्टे—'न चक्राद्य-

तत्त्वं दिव्यप्रबन्धानां सारं संसारवैरिणाम् ।
सरसं सरहस्यानां व्याचक्षाणं नमामि तम् ॥ ३७ ॥

ङ्कनं नेज्या न ज्ञानं न विरागता। न मन्त्रः पारमैकान्त्यं तैर्युक्ता गुरुवश्यता'–इति । श्रीशैलनाथार्यनाम्नीत्यत्र च–'कुर्यादचेतनानां च वैष्णवं नाम लक्ष्म च । करिष्यन् वैष्णवं नाम वैष्णवाश्रयमेव वा' इत्यादिकं वचनमभिप्रेतम्। श्रीमतीत्यत्र–'वैष्णवस्याङ्कशय्यायां वैष्णवस्य गृहेऽपि वा। देशे वा तद्विचरिते संस्थिता यान्ति सद्गतिम्' इत्यादिकमनुसन्धेयम् । अत्र संस्थिता इति वासो विवक्षितः, संस्थाविवक्षणेऽपि तुल्यन्यायेन वासविषयेऽपीदं वचनं प्रमाणं भवति । अत्र मुख्यालाभान्मृत्स्नालिप्तस्य प्रतिनिधेरुपादानं कृतमिति बोध्यम् ॥ 'तदङ्घ्रिपङ्कजद्वन्द्वच्छायामध्यनिवासिनाम्'–इति षष्ठी बहुवचनान्तं केचित् पठन्ति; अस्य च व्याचक्षाणमित्यनेनान्वयः; तत्पदं च भगवद्वरवरमुनिपरम्; परं त्वत्र पाठे तत्पदेन भगवद्वरवरमुनिपरामर्शे 'निजं प्रभुं' 'स्वं निकेतनं' 'स्वचरणाम्भोज'–इति पूर्वोत्तरशैलीभङ्गो भवति । अथवा षष्ठीबहुवचनपाठेऽपि तत्पदं श्रीशैलनाथार्यपरमेव, शिष्याणां स्वाचार्यशिष्यत्वभावनाभिप्रायेण त्विदमुक्तमिति द्रष्टव्यम् ॥ ३६ ॥

तत्त्वमिति ॥ संसारः प्रकृतिसम्बन्धः, तस्मिन् वैरिणां विद्वेषवतां, भूम्नि मत्वर्थीयः; वैरं विरोधो विद्वेष इति कोशः। यद्यपि चेतनविषयविद्वेष एव वैरपदप्रयोगप्रौढिरस्ति, तथाऽपि संसारस्य चेतनत्वसमाधिना वैरपदं प्रयुक्तं, संसारं प्रति हासोक्तिवदिति बोध्यम्। सारं प्रयोजनभूतं, संसारजयोपयुक्तबलभूतं वा; 'सारो बले स्थिरांशेऽर्थे पुमान्वाच्यवरे त्रिषु' इति रत्नमाला; मुमुक्षूणामुपादेयप्रयोजनभूतं स्ववैरविषयसंसारनिरासोपयिकबलभूतमिति वेति भावः। सरहस्यानां मूलमन्त्रमन्त्ररत्नचरमश्लोकात्मकरहस्यत्रयनियतानां; सरसं मधुररसयुक्तं,

मूलमन्त्रादिप्रतिपाद्यतदीयपर्यन्तशेषत्वादिस्वरूपयाथात्म्यादिप्रमेयविशेषात्मकत्वाद्रहस्यत्रयनिष्ठानामधिकारिविशेषाणां विशेषतो भोग्यमिति भावः। दिव्यप्रबन्धानां भगवन्निर्हेतुकप्रसादलब्धज्ञानात्मकदिव्यज्ञानमूलकत्वाद्दिव्यानां, दिगादित्वाद्यदन्तात् यत्प्रत्ययः; प्रबन्धानां द्रमिडोपनिषद्रूपाणां; तत्त्वं–तत्प्रतिपाद्यं स्वरूपादियाथात्म्यं कर्म, 'तत्त्वं विलम्बमाने स्यात् स्वरूपे परमात्मनि' इति रत्नमाला; तत्त्वमिति द्वितीयान्तं व्याचक्षाणमित्युक्तव्याख्यानक्रियायामन्वेति। यद्वा– तत्त्वं दिव्यप्रबन्धाना सारं कर्म, संसारवैरिणां सरहस्यनां सरसं यथा भवति तथा व्याचक्षाणमित्यन्वयः; तत्त्वं वस्तुभूतं, दिव्यप्रबन्धानां द्रविडोपनिषदां, सारं तत्प्रतिपाद्यं प्रयोजनं चरमपर्वात्मकं पुरुषार्थं कर्म, संसारवैरिणां प्रकृतिसम्बन्धं जिहासतां, सरहस्यानां रहस्यत्रयनिष्ठाधिकारिणां, तेभ्य इत्यर्थः; सरसं यथा भवति तथा–सुखबुद्ध्यारूढं प्रातितुल्यप्रीतिप्रकर्षावहं च यथा भवति तथा, व्याचक्षाणं पदच्छेदपदार्थोक्त्यादिभिर्विशदं बोधयन्तं, तं वरवरमुनिं, नमामि– व्याख्यानवैदग्ध्येन जितस्सन्निर्ममोऽनुभवामि। संसारवैरिणस्सरहस्याश्च वाधूलवरदनारायणगुरुप्रभृतयः, ते च स्वप्रमुखेन भगवन्निदेशेन वरवरमुनिमशिश्रयन्; तदुक्तं काव्ये––"पुनस्स्वप्नापदेशेन देशे देशे निरङ्कुशः। अयमर्चावतारस्स्वसमाधिमवधीरयन्। अत्यमर्त्यतया तस्य तत्त्वमात्यन्तिकं हितम्। असङ्कुचितमाचख्यौ भुजङ्गशयनः पुमान्। देशे देशे विशेषज्ञैरज्ञैरप्यविशेषतः। आश्रित्य तत्पदद्वन्द्वमश्रूयत परं हितम्। रामानुजपदद्वन्द्वसौगन्ध्यनिधयोऽपि ये। असाधारणमौज्ज्वल्यमवधूय निजं धिया। उत्तेजयन्तस्स्वात्मानं तत्तेजस्सम्पदा तदा। श्रुत्वैव वैभवं तस्य तत्त्वेन शरणं गताः। सिन्धुस्सद्गुणरत्नानां सीमा शेषत्वसम्पदाम्। वाधूलवरदाचार्यो मौक्तिकं मनीषिणाम्। अभूदनुपमस्तस्य विभूषणमनुत्तमम्। रामानुजमुनीन्द्रस्य श्रीमान् दाशरथि-

येया"–इति। उत्तेजनं शरवत्तन्मयो भवेदित्युक्तशरदृष्टान्ताभिप्रायेण ; यद्वा–उत्तेजनं कुर्वत इत्यर्थेन कौस्तुभत्वाभिप्रायेणोक्तम्। एतेन पूर्वमनवाप्तातिशयलाभाय भगवत्साक्षिकप्रभावयुक्तव्यक्तिविशेषाश्रयणं युक्तमित्युक्तं भवति; 'यदर्थं तु कृतं पूर्वं तदर्थं न पुनः क्रिया'–इति न्यायात्। उक्तं च शाण्डिल्येन–'आचार्यचित्तानुगुणं सिद्धान्तानुगुणं त्वपि। अन्यत्र शृणुयाज्ज्ञेयमनुज्ञाप्यैव जीवति। यस्मिन् परमविद्यायां न संसिद्धिरबोधतः। गुरोर्वाऽप्यन्यतो ग्राह्या परा विद्या गुणान्वितात्'–इति। व्याचक्षाणमित्यत्र ताच्छीलिकश्चानश् प्रत्यय., तेन तत्र वैदग्ध्यं व्यञ्जितम्; व्याख्यानवैदग्ध्यं काव्ये विस्तरेणोक्तम्– "आशङ्कामविधेयानां वाक्यानामवतारणे। अविस्तरेण निर्णीतिमर्थानां प्रतिपादने। पूर्वोत्तरानुसन्धानमभिप्रायप्रकाशने। असन्दिग्धं समाधानमाक्षेपेषु निरुत्तरम्। वीक्षमाणाश्चिरं तत्र व्यस्मयन्त विचक्षणाः। स एव भगवानेवं सहस्रवदनस्स्वयम्। अवातरदिति व्यक्तमित्यवोचन् परस्परम्। श्रुत्यन्तसूत्रसूक्ष्मार्थप्रकाशनपरैः पुरा। परमैर्योगिभिर्दृष्टान् प्रबन्धानन्यधात् परम्। प्रस्तुतानन्वभूत्तत्र भगवद्गुणविग्रहान्। प्रपेदे परमं हर्षं प्रत्यक्षानुभवादपि। शब्दशक्तिरियं नित्या शृण्वतां गृह्णतामपि। सर्वात्मना हृदि स्वार्थान् सन्निधापयतीति यत्। अतद्दशास्वप्यभिव्यक्तं कुर्वन् सर्वोपकारकः। सत्त्वशुद्धिकरं ध्येयमविकर्षेण चेतसः। गुणानुभवनं पत्युर्भृत्यकृत्यमपि प्रियम्। वाचिकं यानिकेनैव सर्वदा विदधे सुधीः। तत्तत्प्रबन्धकाराणां गुरूणां तत्र सन्निधिम्। तानेव तदर्थानां व्याख्यातॄनप्यमन्यत। श्रोतृषु प्रथमत्वं तु चिन्तयन्नात्मनस्स्वयम्। अनुवक्तृत्वमास्थाय परेभ्यः प्रत्यपादयन्। अज्ञानामग्रगण्यं मामभिप्रेत्य यतीश्वरः। अज्ञानज्ञापने प्राज्ञमकार्षीदित्यबुध्यत। प्रत्यक्षयन्नितरथात्मनस्तत्तयाथात्म्यसम्पदाम्। आचार्याधीनवृत्तीनां प्राचामेव मनीषिणाम्। चरित्राणि पवित्राणि

ततः स्वचरणाम्भोजस्पर्शसम्पन्नसौरभैः ।
पावनैरर्थिनस्तीर्थैर्भावयन्तं भजामि तम् ॥ २८ ॥

चित्राणि वचनानि च । मध्ये मध्ये मुनिर्ध्यात्वा भृत्यानां प्रतिपादयन् । स्वैराद्यैस्सुमधुरैस्स्वस्वरूपविनिश्चयम् । श्रोतॄणां प्रतिमारोप्य मुव्यक्तं प्रत्यबोधयत्"—इति । भगवद्दिव्यालयात् स्वनिकेतनागमानन्तरं व्याख्यानं भरद्वाजेनोक्तम्—'प्रभुं भक्तपराधीनं नित्यमालोकयेद्धरिम् । विमानमथवा तस्य दूराद्गोपुरमेव वा । स्वरूपरूपविभवगुणकर्मादि शार्ङ्गिणः । व्याचक्षीत निबध्नीयात् शृणुयाद्विलिखेत् पठेत् । चतुर्भुजमुदाराङ्गं श्यामं पद्मनिभेक्षणम् । श्रीभूमिनीलासहितं चिन्तयेच्च सदा हृदि'—इति ; 'सद्भिः प्रणिहितांश्चान्यान् प्रबन्धान् परिशीलयेत्'—इति च । व्याचक्षीतनिबध्नीयादिति वचनप्रत्यभिज्ञानार्थमेव व्याचक्षाणमिति निर्दिष्टम् । अनेन—'कृपयाऽऽश्रमिणस्सर्वे धर्मं ब्रूयुस्त्वलिङ्गिने ।' 'परिव्राडपि वा ब्रूयात्' इति विशेषशास्त्रबलात् 'न व्याख्यानपरो भवेत्' 'न व्याख्यामुपयुञ्जीत' इति सामान्यनिषेधस्त्रैवर्गिकाशिष्येभ्यः ख्यात्यार्थेन मोक्षानुपयुक्तग्रन्थव्याख्यानविषय इति ध्वनितम् ॥ २७ ॥

तत इति ॥ ततः—दिव्यप्रबन्धव्याख्यानानन्तरं, स्वस्य—स्वाचार्यकरणत्वेन स्वात्मानं भावयतः स्वस्य ; चरणाम्भोजयोः पद्मतुल्यश्रीपादयोः, सौरभ्यपावनत्वाभ्यां सादृश्यं विवक्षितम् ; स्पर्शेन सम्बन्धेन, सम्पन्नसौरभैः समधिकसौगन्ध्यभरितैः, पावनैः पवित्रैः ; इदं विशेषणद्वयं पद्मसादृश्यवर्णनफलितम् । तीर्थैः—विशिष्टसलिलैः, 'तीर्थं शास्त्राध्वरक्षेत्रोपायोपाध्यायमन्त्रिषु । अवतारर्षिजुष्टाम्भः'—इति कोशः ; तरन्त्यनेन तीर्थमिति व्युत्पत्तिश्चात्र द्रष्टव्या । अर्थिनः याचमानान् पूर्वोक्तसंसारवैरिणः कर्म, भावयन्तमुज्जीवयन्तं, भवनं सत्ता ; तं वरवरमुनिं, भजामि । श्रीपादतीर्थप्रदानप्रयुक्तोदार्यानुसन्धानेन विद्वत्प्रचिर्मेणोऽनुभजामि ।

अत्र पावनैरित्यत्र-'स्नातं च गुरुणा यत्र तीर्थं नान्यत्ततोऽधिकम्', इति भरद्वाजवचनमभिसंहितम्। अर्थिन इत्यत्र च-'प्रक्षाल्य चरणौ पात्रे प्रणिपत्योपयुज्य च' इति तद्वचनमभिप्रेतम्। ऋषिजुष्टाम्भोवाचिना तीर्थशब्देन च ऋषयोऽप्येतच्छ्रीपादाम्बु जुषन्त इति लभ्यते ; 'अनुग्रनाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः' इति न्यायात्। तीर्थैरिति बहुत्वं प्रदानार्थवदानोपाधिकं सत् कपिञ्जलाधिकरणन्यायात् त्रित्वे पर्यवस्यति; स्मर्यते च-'त्रिः पिबेद्विन्दुवर्जितम्' इति। कैश्चित्तु द्विवारमेव दीयते; तेषामयमाशयः—उशनस्स्मृतौ 'यत्र भागवतानां तु पादोदकनिषेवणम्। पावनं सर्वभूतानां सोमपानसमं स्मृतम्' इति भागवतपादोदकनिषेवणस्य सोमपानसाम्यमुक्तम्; तत्र चासङ्कोचात् फलतः प्रकारतश्च तत्साम्यं विवक्षितम्; प्रकारश्च सङ्ख्याविशेषः, द्विवारं हि सोमपानं क्वचिदनुष्ठीयते; तथा च सोमप्रयोगे माध्यन्दिनसवनमधिकृत्योक्तं-'होतृकाः स्वं स्वं चमसं द्विर्भक्षयन्ति' इति; तथा च द्वित्वसङ्ख्ययाऽपि सोमपानसाम्यात् पादोदकनिषेवणं द्विवारं कार्यम्—इति। तदपि यथासम्प्रदायमनुष्ठेयम्। भावयन्तमित्यनेन प्रायश्चित्तार्थत्वमत्र व्युदस्यते; सम्पन्नसौरभत्वं च स्वसम्बन्धादन्येषामपि तत्सम्पादकत्वं, तेन तदीयानामपि तत्सम्बन्धात्तीर्थपादत्वमित्युक्तं भवति। भरद्वाजसंहितायां च-'दण्डवत्प्रणमेद्भूमावुपेत्य गुरुमन्वहम्। दिशे वाऽपि नमस्कुर्याद्यत्रासौ वसति स्वयम्' इत्युपक्रम्य, आचार्यविषये शिष्यस्य वृत्तिविशेषानुक्त्वा, मध्ये 'प्रक्षाल्य चरणौ पात्रे प्रणिपत्योपयुज्य च' इत्युक्त्वा, तदनन्तरमपि कांश्चन वृत्तिविशेषानुक्त्वा-'आचार्योऽपि तथा शिष्यं स्निग्धो हितपरस्सदा। प्रबोध्य बोधनीयानि वृत्तिमाचारयेत् स्वयम्'—इत्युक्तेराचार्याद्धितश्रवणस्याचार्यपादतीर्थोपयोगोऽङ्गमिति सन्निधिप्रकरणाभ्यामवगम्यत इत्यभिप्रायेण ततस्त्वचरणाम्भोभिरित्युक्तमिति द्रष्टव्यम् ॥ २८ ॥

आराध्य श्रीनिधिं पश्चादनुयागं विधाय च।
प्रसादपात्रं मां कृत्वा पश्यन्तं भावयामि तम् ॥ २९ ॥

आराध्येति ॥ पश्चात् माध्यन्दिनकृत्यानुष्ठानानन्तरं, तदुक्तं काव्ये—'अथ माध्यन्दिनं कृत्यं कृत्वा सर्वोत्तरो मुनिः। आराध्य विधिवद्देवमन्वभूद्रङ्गभूषणम्' इति। श्रीनिधिं—श्रियो लक्ष्म्या निधिं निधिवत् सम्पद्भूतं, श्रियश्श्रियं रङ्गनिधिं; आराध्य अर्चयित्वा, 'यथा युवानं राजानं यथा च मदहस्तिनम्। यथा प्रियातिथिं योग्यं भगवन्तं तथाऽर्चयेत्। सतीव प्रियभर्तारं जननीव स्तनन्धयम्। आचार्यं शिष्यवन्मन्त्रं मन्त्रिवल्लाल्येद्धरिम्'—इति शाण्डिल्योक्तरीत्या भगवन्तं परमभक्त्याऽऽराध्येत्यर्थः। अनुयागं—अनुयागसंज्ञितं परमात्मसमाराधनसमाप्तिप्रसादप्रतिपत्तिसंस्काररूपं, विधाय; यथोक्तं भरद्वाजेन—'जुहुयादाहुतीः पञ्च विष्णौ प्राणादिसंज्ञिके' इत्युपक्रम्य, 'कृत्वाऽनुयागम्' इति। शाण्डिल्येनाप्युक्तं—'धातारं हृदयान्तस्स्थं ध्यात्वा पादाम्बुपूर्वकम्। तथाऽस्ये जुहुयादन्नं तत्तन्मन्त्रैस्समाहितः। ध्यायन्नेव परं ब्रह्म भोक्तारं हृदयस्थितम्। अश्नीयादत्वरो मन्त्री भोज्यं सर्वमकुत्सयन्'—इति; 'पथ्यं मितं च शुद्धं च रस्यं हृदयनन्दनम्। स्निग्धं दृष्टिप्रियं कोष्णमन्नं भोज्यं मनीषिभिः' इति च। अत्र चैकान्न्यम्-नुज्ञा तु गुरुवचनादिना न लुप्यतीति पूर्वमेवोक्तम्। चकारेण तदीयाराधनमुच्यते। यथोक्तं काव्ये—"ततस्तन्मुखसंस्पर्शसरसेन सुगन्धिना। शुचिना सुकुमारेण सत्त्वसंशुद्धिहेतुना। भक्तिपूतं प्रसूनेन भोज्येन भगवत्प्रियान्। तत्परस्तर्पयामास तत्प्रीतिप्रेमवृद्धये। आत्मानमात्मनः पश्यन् भोक्तारं पुरुषं परम्। अनुयागं यथायोगं निस्सङ्गो निरवर्तयत्" इति। तदीयाराधनं च विशेषशास्त्रसिद्धम्। तदुक्तं भरद्वाजपरिशिष्टे—'मुनयस्सत्त्वनिष्ठानां लक्षणानि निबोधत। विष्णोर्दास्य-

ततश्चेतस्समाधाय पुरुषे पुष्करेक्षणे ।
उत्तंसितकरद्वन्द्वमुपविष्टमुपह्वरे ॥ ३० ॥

---

फलता तदेकोपायता स्थितिः । तदाज्ञाकरणे प्रीतिस्तत्कर्मगुणकीर्तनम् । तचिह्नाङ्कितदेहत्वं तदीयाराधने रतिः । तदन्यस्पर्शवैराग्यमिन्द्रियार्थेष्वलोलता । आचार्याधीनवृत्तित्वमाचार्यार्थात्मदेहता । क्रोधलोभमदालस्यमानमोहविहीनता । सत्यशौचदयाधैर्यक्षमासन्तोषयुक्तता । इत्येतैर्लक्षणैर्युक्ता वैष्णवाः"–इति । अनेन–'अपिचास्य कुतो दानं दत्वा चास्य कुतः फलम् । दाता प्रतिगृहीता च प्रेत्यैव नरकं व्रजेत्' इत्यादिकमवैष्णवयतिविषयम्–इत्युक्तं भवति। मां–पूर्वं प्रसादप्रस्तावे 'यत्यन्नं यतिपात्रस्थम्' इत्यादिसामान्यवचनोदाहरणमुखरतया दुर्बुद्धिवशाद्विमुखं मां, प्रसादपात्रं कृत्वा प्रसादस्य भुक्तोज्झितस्य भोजनपात्रस्थस्य भोज्यशेषस्य पात्रं योग्यं भाजनं वा कृत्वा, 'योग्यभाजनयोः पात्रं'–इति कोशः; पश्यन्तं तथाभूतस्यास्य केयं व्युष्टिरिति सविस्मयहर्षकरुणं प्रेक्षमाणं, तं वरवरमुनिं, भावयामि ध्यायामि। प्रसादपात्रमित्युच्छिष्टाशनात्मिका वृत्तिरुक्ता; तदुक्तं भरद्वाजेन– 'योऽसौ मन्त्रवरं प्रादात्संसारोच्छेदसाधनम्। प्रतीच्छेद्गुरुवर्यस्य तस्योच्छिष्टं सुपावनम्'–इति । अत्र–आचार्यविषये शिष्यस्य वृत्तिविशेषविधानप्रकरणात्तन्मध्यगतमिदं नैमित्तिकात् गुरोरुच्छिष्टभोजनादन्यदेवेति स्फुटम् । अत्र च 'यत्यन्नं यतिपात्रस्थम्' इत्यादिकमवैष्णवविषयं गुरुव्यतिरिक्तयतिविषयं चेति द्रष्टव्यम् ॥ २९ ॥

तत इति ॥ ततः–अनुयागानन्तरं, पुष्करेक्षणे पुण्डरीकाक्षे, पुरुषे पुरुषशब्दवाच्ये भगवति, चेतः हृदयं, समाधाय समाधिमत्कृत्वा, समाधिर्योगः; उत्तंसितं शिरोभूषणीकृतं करद्वन्द्वं पाणिद्वन्द्वं यथा भवति तथा; अत्र द्वन्द्वशब्दोऽञ्जलित्वाभिप्रायकः, उत्तंसितत्वसामर्थ्यात्;

उपह्वरे रहसि, 'रहोन्तिकमुपह्वरे'; उपविष्टं आसीनम्, अनेन 'उपविश्यासने युञ्ज्यात्' इति वचनं स्फोरितम्। अस्य च 'नित्यं मुनिं वरवरं निभृतो भजामि' इत्यत्रान्वयः। अनुयागानन्तरं योगश्शाण्डिल्येनोक्तः-"अष्टाङ्गयोगप्रीतिं च कृत्वा ध्यानपरो वशी'-इति। भरद्वाजश्चाह-'कृत्वाऽनुयागं कुर्वीत स्वाध्यायं वैष्णवं परम्। ततो युञ्जीत चात्मानं पुरुषे पुष्करेक्षणे'-इति; ततश्च युञ्जीतेत्यन्वयः, चकारेण स्वाध्यायात् पूर्वमपीति लभ्यते, तेनानुयागानन्तर्यं सिद्धम्। योगश्चाराधनवत् कालत्रयेऽप्यनुष्ठेय इत्युत्तरत्र वक्ष्यते। पुष्करेक्षणस्वलिङ्गाद्योगिहृदये सविग्रहावस्थानमुच्यते । पराशरश्चाह-'देवतिर्यङ्मनुष्यादिचेतनेष्वपि संस्थितः। तदन्तर्याम्यवस्था हि विष्णोस्सर्वगतस्य वै। स एव योगिहृदयपङ्कजे तु सविग्रहः'-इति। अत्र च-''स यश्चायं पुरुषे, यश्चासावादित्ये' इत्यादित्यमण्डलान्तर्वर्तिनः पुरुषान्तर्वर्तिनश्चैक्योक्तेः। 'तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी' इत्यादित्यमण्डलस्थस्य च पुण्डरीकाक्षत्वोपदेशात् तदभिन्नस्य पुरुषान्तर्वर्तिनोऽपि पुण्डरीकाक्षत्वमित्यभिप्रायेण पुरुषे पुष्करेक्षण इति भरद्वाजेनोक्तम्; पुरुषपदं च-'पूस्संज्ञे वै शरीरेऽस्मिन् शयनात् पुरुषो मतः' इति निर्वचनात् पुरुषान्तर्वर्तिनं भगवन्तमभिधत्ते। अत एव काव्येऽप्येतद्योगप्रकरणे-'विमलायतलोचने। अपराधसहे नित्यं दहराकाशगोचरे'-इत्युक्तम्। अत्रत्यदहराकाशशब्दो-'ब्रह्मपुरे दहरं पुण्डरीकं वेश्म' इत्युक्तहृदयपुण्डरीकविवरमाह, अपराधसह इत्येतत् 'अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति। ईशानो भूतभव्यस्य न ततो विजुगुप्सते' इति श्रुत्युक्तार्थकथनम्। आभ्यां दहरप्रमिताधिकरणार्थौ स्मारितौ। 'ततश्चैतस्समाधाय पुरुषे पुष्करेक्षणे' इत्येतच्च-'ततो युञ्जीत चात्मानं पुरुषे पुष्करेक्षणे' इत्यस्य शब्दतोऽर्थतश्च प्रत्यभिज्ञापकं; तत्र ततश्चैतस्समाधायेत्येतत् 'ततो युञ्जीत चात्मानं',

अब्जासनस्थमवदातसुजातमूर्ति-
मामीलिताक्षमनुसंहितमन्त्ररत्नम् ।
आनम्रमौलिभिरुपासितमन्तरङ्गै-
र्नित्यं मुनिं वरवरं निभृतो भजामि ॥३१॥

ततश्शुभाश्रये तस्मिन्निमग्नं निभृतं मनः ।

---

इत्यस्यार्थेत प्रत्यभिज्ञापकं; चेत इत्यात्मानमित्यस्य व्याख्यानम्, 'आत्मा यत्नधृतिस्वान्तस्वभावपरमात्मसु' इति हि रत्नमाला; समाधायेति च युञ्जीतेत्यस्य व्याख्यानं, युजिसमाधाविति ह्यर्थनिर्देशः; तत इत्येतत्तु वचनस्यचशब्दव्याख्यानमिति द्रष्टव्यम्; पुरपे पुष्करेक्षण इत्येतत् शब्दतस्तत्प्रत्यभिज्ञापनम्; प्रत्यभिज्ञापनप्रयोजनं तूक्तमेव ॥ ३० ॥

अब्जेति ॥ अब्जासनस्थं पद्मासनस्थितं; योगे पद्मासनं विश्वामित्रेणोक्तं—"ततो निवातके रम्ये निम्नोन्नतविवर्जिते। कुशाजिनसुचेलानि, उपर्युपरि विन्यसेत्। पद्मासनं तु तत्रैव कृत्वाङ्गानि समं नयेत्"—इति। अवदाता क्षीरसङ्घातगौरी, सुजाता कमनीया, मूर्तिर्विग्रहो यस्य स तथोक्तस्तं; आमीलिताक्षं ईषन्मीलितलोचनं, स्मर्यते हि 'नासाग्रन्यस्तनयन' इति। अनुसंहितमन्त्ररत्न—उपांशूच्चार्यमाणद्वयं; 'अनेन मन्त्ररत्नेन मत्प्रियेण मनेत्सदा' इति ह्युक्तम्। आनम्रमौलिभिः सम्यगवनतशिरस्कैः, अन्तरङ्गैः वाधूलवरदाचार्यभट्टनाथवेदान्ताचार्यप्रभृतिभिः, उपासितं निरन्तरं साक्षात्क्रियमाणं, 'सदा परगुणाविष्टो द्रष्टव्यस्सर्वदेहिभिः' इति ह्युक्तम्। वरवरं मुनिं, निभृतस्सन् अवहितस्सन्, अहं, नित्यं भजामि—सर्वकालं सेवे; 'विग्रहालोकनपरः' इति ह्युक्तम् ॥३१॥

तत इति ॥ ततः—यतीन्द्रचरणद्वन्द्वप्रवणेनैव चेतसा तदुद्देश्यभगवद्योगानन्तरं, तस्मिन् पूर्वोक्ते, शुभाश्रये पुष्करेक्षणे पुरुषे, हेयप्रत्यनीकत्वे सति दिव्याकारत्वं शुभाश्रयत्वमित्युक्तं पूर्वं । निमग्न

यतीन्द्रप्रवणं कर्तुं यतमानं नमामि तम् ॥ ३२ ॥

अवगाढं, निभृतं निष्पन्दं, मनः कर्म, यतीन्द्रप्रवणं कर्तुं–यतीन्द्रप्रवणमेव कर्तुं; पूर्वत्र हि 'यतीन्द्रचरणद्वन्द्वप्रवणेनैव चेतसा' इत्येतत् कर्तव्यभागेषु स्वाधिकारानुरूप्यावगमनायान्यविशेषणतया निर्दिष्टं, अत्र तु तस्यानन्यार्थत्वमुच्यते । यतमानं आरभमाणं, तं यतीन्द्रप्रवणत्वेन प्रसिद्धं वरवरमुनिं, नमामि–चरमपर्वनिष्ठाविशेषगरिष्ठत्वानुसन्धानेन निर्भरोऽहं तत्सम्बन्धमात्मनोऽनुसन्दधामि; निष्ठावत्सम्बन्धो हि निष्ठाप्रापक इति भावः ॥ ३२ ॥

इति

दिनचर्याव्याख्यायां

सदाचारदीपिकासमाख्यायां

पूर्वदिनचर्याविभागः ॥



॥ श्रीः ॥

# यतिराजविंशतिः

यस्स्तुतिं यतिपतिप्रसादिनीं
व्याजहार यतिराजविंशतिम् ।
तं प्रपन्नजनचातकाम्बुदं
नौमि सौम्यवरयोगिपुङ्गवम् ॥

श्रीमाधवाङ्घ्रिजलजद्वयनित्यसेवाप्रेमाविलाशयपराङ्कुशपादभक्तम् ।
कामादिदोषहरमात्मपदाश्रितानां रामानुजं यतिपतिं प्रणमामि मूर्ध्ना ॥ १ ॥

---

## यतिराजविंशतिव्याख्या

अभिगमनोपादानेज्यानु स्वाचार्यं वरवरमुनिमनुभूय क्रमप्राप्ते स्वाध्याये तमनुबुभूषुः, स्वाध्यायस्य 'व्याख्यानैरुत्तनैवाऽपि ग्रन्थनिर्माणकर्मणा । शिष्याणां शिक्षया वाऽपि स्वाध्यायार्थोऽयमुच्यते' इत्यादिशाण्डिल्योक्तरीत्याऽनेकप्रकारत्वेन तत्र व्याख्यानरूपं स्वाध्यायप्रभेदं 'वाक्यालङ्कृतिवाक्यानि व्याख्यातारम्' इत्युत्तरत्र वक्ष्यन्, ग्रन्थनिर्माणकर्मणेत्युक्तं भगवता वरवरमुनिना स्वाधिकारानुगुणं भगवद्यतीन्द्रविषयस्तोत्रनिर्माणरूपग्रन्थकरणात्मकं स्वाध्यायप्रभेदं वदन्, 'तद्वचश्श्रवणोत्सुकः । आज्ञाभ्यर्थनमालोकनिर्देशवचनादरः' इति भरद्वाजोक्तदिशा स्वाचार्यवचश्श्रवणमज्ञातं स्वस्य मनःप्रसादं 'इति यतिकुलधुर्यमेधमानैः' इत्यादिनोत्तरत्र च वक्ष्यन्, तत्र ग्यमनिष्पादनशब्दस्वरूपपरामर्शकेन इतिशब्देन परामर्शाय यतिराजविंशतिमनुवदति—श्रीमाधवेत्यादिभिः ॥

भगवान् वरवरमुनिः प्रपन्नजनकूटस्थपराङ्कुशसूरिप्रभृतिसर्वपूर्वाचार्यपरम्पराप्राप्तं स्वाचार्येण श्रीशैलनाथेन स्वस्मै प्रसादितं रहस्यत्रयतात्पर्यपर्यवसानभूमिभूतं भगवतो रामानुजस्य निरपायोपायत्वं निरतिशयोपेयत्वञ्च प्रीतिप्रकर्षहठात्कारेण दुर्गतप्राणिगणप्राणनप्रवीणकरुणोद्गारेण च यतिराजविंशतिसमाख्यावता स्तोत्रेण प्रतिपिपादयिषुश्चिकीर्षितस्याविघ्नसमाप्तयर्थं स्वाधिकारानुरूपं गुरुनमस्क्रियारूपं मङ्गलमाचरति—द्वाभ्यां श्लोकाभ्याम् ॥ अत्र च विवक्षावशात्—मूलमन्त्रे त्रीणि पदानि, मन्त्ररत्ने च षट्पदानि, चरमश्लोके चैकादश पदानीति—सङ्कलनया विंशतिसम्पत्त्या व्याख्येयरहस्यत्रयपदसङ्ख्यानुगुणा विंशतिसङ्ख्या व्याख्यायां यतिराजविंशतावाश्रितेति द्रष्टव्यम् ॥

**श्रीमाधवेति** ॥ श्रीमाधवस्य सर्वप्रकारभोग्यस्य श्रियः पत्युः, श्रीश्चानन्याधेयातिशया, तद्वत्सर्वप्रकारशेषत्वं दर्शयति श्रीशब्द इति न माशब्देन पौनरुक्त्यं; श्रीशब्दो वा मुख्यार्थपर एव सन् अङ्घ्रिजलजद्वयेऽन्वेति, श्रीमन्तौ हरिचरणाविवितिवत्; श्रियो माधवाङ्घ्रिजलजद्वयमिति षष्ठीसमासः, सम्बन्धश्च वास्तव्यनिवासभावरूपः; जलजे इवाङ्घ्री अङ्घ्रिजलजे, तयोर्द्वयस्य, नित्यसेवायां नित्यकैङ्कर्ये, प्रेम्णा अत्युत्कटरागेण, आविलं अप्रकृतिं गतः आशयः प्रज्ञा यस्य स तथोक्तः; तथाविधस्य पराङ्कुशस्य—प्रमाणतर्कैः प्रतिपक्षनिरासनसिद्धपराङ्कुशनामधेयस्य भगवतः शठारिमुनेः, पादयोर्भक्तं परमभक्तिमन्तम्। अत्र—अङ्घ्रिजलजद्वयप्रेमाविलाशये पराङ्कुशे भगवतः प्रेमातिशयाभिप्रायेण माधवेत्युक्तं, माधवो भक्तवत्सल इति हि सहस्रनामसु पठितं; आत्मपदाश्रितानां स्वचरणमाश्रितानां, कामाददाप हरं कामक्रोधलोभाद्यात्मस्वरूपगतहेयधर्मनिवर्तकं, रामानुजं लक्ष्मणावतारत्वाद्गुणविशेषैश्च रामानुजनामधेयं, यतीनां निर्जितेन्द्रियग्रामाणामुत्तमाश्रमिणां पतिं शोषिणं रसकञ्च भगवन्तं भाष्यकृतं, मूर्ध्ना शिरसा, प्रणमामि प्रक-

श्रीरङ्गराजचरणाम्बुजराजहंसं श्रीमत्पराङ्कुशपदाम्बुजभृङ्गराजम्। श्रीभट्टनाथपरकालमुखाब्जमित्रं श्रीवत्सचिह्नचरणं यतिराजमीडे ॥ २ ॥

---

र्पेण प्रह्वीभवामि। अत्र पूर्वार्धेन प्राप्तविषयप्रावण्यं कामादिदोषहरमित्यप्राप्तविषयप्रावण्यनिवर्तकत्वं चोक्तं; तदुभयनिदानञ्च रामानुजं यतिपतिमित्याभ्यामुच्यते; रामानुजस्य ह्यभिनवदशावतारेषु रामावतारत्वेन प्रसिद्धपराङ्कुशप्रावण्यमुचितं; यतिपतेर्हि कामादिनिरसनमनुरूपमिति गुणकृतभगवत्प्रावण्यादपि स्वरूपप्रयुक्तभागवतप्रावण्यमत्यतिशयितमित्यभिप्रायेण पादपद्मयोर्जलजविशेषणानुपादानं, चरमपर्वनिष्ठस्योत्तमाश्रमिणश्च स्वस्यादरनिबन्धनं चरमनिष्ठत्वमुत्तमाश्रमित्वञ्चेत्यभिप्रायेण पराङ्कुशपादभक्तं यतिपतिमित्युक्तम्; 'भक्तिश्च नियता वीर भावो नान्यत्र गच्छति' इति न्यायात्। अत्र च श्रीमाधवाङ्घ्रीत्यादिकं श्रीमदमृतार्यप्रणीतप्रपन्नसावित्रीशैलीं प्रत्यभिज्ञापयति, सा हि भगवता रामानुजेन साक्षादनुमोदिता; अत्र देवतावाचका इत्यादिकं पूर्वत्र लिखितमनुसन्धेयम्; 'संयुक्ताश्चेन्द्रयपद्याद्ययुक्ताः क्षान्त्यै सर्वे श्रीयमापादयन्ति' इत्युक्तेः ॥ १ ॥

"दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुरः। तत्रापि दुर्लभं मन्ये वैकुण्ठप्रियदर्शनम्" इत्यत्र प्रसज्यप्रतिषेधस्याप्यकरणेन व्यञ्जितदौर्लभ्यातिशयके चरमपर्वमूर्धाभिषिक्तयतिराजविंशत्यात्मकस्तुतिकरणरूपभागवतशेषत्वे विघ्नभूयस्त्वमाशङ्कमानः पुनरपि मङ्गलं स्वाधिकारानुरूपमाचरति—श्रीरङ्गेति ॥ अत्र–श्रीशब्दश्श्रीमत्परो रङ्गराजविशेषणं चरणाम्बुजविशेषणं वा, श्रीरङ्गराजस्य चरणावेवाम्बुजे चरणाम्बुजे, तयो राजहंसं तच्छाया निषण्णहंसश्रेष्ठम्; राजहंसमित्यत्र राजहंस एव राजहंस इति श्लिष्टरूपकं; राजहंसः परमहंसः, शुद्धस-

वाचा यतीन्द्र मनसा वपुषा च युष्मत्पादारविन्दयुगलं भजतां गुरूणाम् । कूरादिनाथकुरुकेशमुखाद्यपुंसां पादानुचिन्तनपरस्सततं भवेयम् ॥ ३ ॥

---

विवेचकत्वादिना सादृश्याद्रूपणं, श्रीमतः भगवदनुभवकैङ्कर्यपरभक्तिपरज्ञानपरमभक्तिप्रमुखस्वरूपानुरूपसम्पत्पूर्णस्य, भूम्नि मतुप्; पराङ्कुशस्य चरणावेवाम्बुजे, तयोर्भृङ्गराजं भृङ्गश्रेष्ठं; भृङ्गो हि मधुव्रतः, तद्द्वारकनैयत्यमुक्तं भवति, भृङ्गावान्तरभेदेपूत्तमत्वाभिप्रायेण राजशब्दः॥ श्रीभट्टेत्यादि। अत्रापि श्रीशब्दश्श्रीमत्परः, भट्टनाथस्य हि श्रीः परतत्त्वस्थापनरूपा तत्पूर्वकमङ्गलाशासनरूपा च; परकालस्य तु श्रीः–परवादिनिरसनरूपा दिव्यदेशजीर्णोद्धारणरूपा अनितरसाधारणभगवद्विश्लेषा(1)सहत्वलक्षणमार्दवकाष्ठारूपा च, श्रीभट्टनाथपरकालयोर्मुखे एवाब्जे पद्मे तयोर्मित्रं विकासकत्वाद्रूपणं, परतत्त्वस्थापनादितद्धर्मधर्मकत्वात्तन्मुखोल्लासकरत्वमिति भावः; श्रीभट्टनाथपरकालमुखानां तत्प्रमुखानां–'मुखं प्रधाने पुंरङ्गे' इति रत्नमाला, सरोयोगिप्रभृतीनामब्जानां पद्मानां मित्रमितिवाऽर्थः। श्रीवत्सचिह्न एव परमकारुणिकत्वादिना श्रिया सुसदृशः, कूरनाथ एव चरणौ पादौ यस्य स तथोक्तः; तं यतिराजं भगवन्तं भाष्यकारमीडे स्तौमि। पूर्वत्र कायिकं मङ्गलमात्रञ्च वाचिकञ्च कृतं; तदुभयाक्षिप्तन्तु मानसमपि सिद्धं, पूर्वत्रैव मङ्गलं कृतं; अत्र तु चिकीर्षितस्तोत्रनिर्देश इत्यपि द्रष्टव्यं; अत्राप्यमृतार्यकृतप्रपन्नसावित्रीप्रत्यभिज्ञापनं प्रायेण कृतमिति बोध्यम् ॥ २ ॥

एवं मङ्गलमनुष्ठाय स्तोत्रमारभते—वाचेति ॥ उत्तरश्लोके तच्छेषत्वं प्रार्थयिष्यमाणस्तत्प्रतिष्ठापकं तदीयशेषत्वमत्र प्रार्थयते, श्रीवत्सचिह्नेति च प्रस्तुतं कूरनाथं तत्समानयोगक्षेमानन्यांश्च शेषवृत्ति-

---

(1) (पा) विश्लेषासहत्व.

नित्यं यतीन्द्र तव दिव्यवपुस्स्मृतौ मे सक्तं मनो भवतु वाग्गुणकीर्तनेऽसौ । कृत्यञ्च दास्यकरणं तु करद्वयस्य वृत्त्यन्तरेऽस्तु विमुखं करणत्रयं च ॥ ४ ॥

प्रतिसम्बन्धित्वेन प्रार्थयते—हे यतीन्द्र मनसा हृदयेन वाचा वागिन्द्रियेण शब्दरूपया वाचा वा, वपुषा कायेन च, मनसः उभयोपकारकत्वाभिप्रायेण मध्यनिर्देशः, मनोवाक्कायैः करणैः ; युष्माकं तव, युष्मदि गुरावेकेषामिति सूत्रेण एकत्वे बहुवचनम् ; यतीन्द्रतदुद्देश्यपराङ्कुशातदुद्देश्यश्रीमाधवाभिप्रायेण वा युष्मदिति निर्देशः, पादारविन्दयोः पावनभोग्यत्वाभ्यां पद्मतुल्यचरणयोर्युगलं, साहित्यसौन्दर्यं नैरपेक्ष्यञ्च बोधयितुं युगलशब्दः प्रयुक्तः, युष्मच्छब्दस्य बहुत्वपरत्वे स्तनौ-तरुण्य इतिवद्युगलशब्दोपपत्तिः । भजतां सेवमानानां गुरूणां पराङ्कुशपादभक्तं श्रीमन्नाथपरकालेति प्रस्तुतदिव्यसूरिप्रणीतद्रमिडोपनिषद्व्याख्यानं गृणतां, गृणन्तीति गुरवः, कृग्रोरुच्चेत्युप्रत्ययः ; अज्ञानान्धकारनिरासकानां वा । कूराधिनाथः श्रीवत्सचिह्नः, कुरुकेशः—'पुत्रीकृतो भाष्यकृता स्वयं यः' इत्युक्तः कुरुकेश्वरः, मुखमादि येषां ते तथोक्ताः, तथाभूतानां ; मुखपदेन गोविन्ददाशरथिप्रभृतयो गृह्यन्ते ; आद्यानां पूर्वेषां, पुंसां पुरुषाणां ; तदीयशेषत्वसारभूतयतीन्द्रशेषत्वनिष्ठतया परिशुद्धत्वाभिप्रायेण पुंसामित्युक्तं ; पूञोडुम्सुन्निति पूञ्पवने इत्यस्मात्पुंशब्दनिष्पत्तेः ; 'क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता' इति ह्युक्तम् । सततं सर्वकालं, पादानुचिन्तनपरः चरणानुध्यानपरः, अनुचिन्तनं शेषित्वेन स्मरणं, भागप्रतिसम्बन्धित्ववाची ह्यनुशब्दः ; भवेयं भवितुं प्रार्थये । अत्राप्यरविन्दशब्दनिर्देशास्स्वरूपप्राप्तत्वाभिप्रायक इति द्रष्टव्यम् ॥ ३ ॥

तदीयशेषत्वप्रतिष्ठाख्यं तच्छेषत्वं प्रार्थयते—नित्यमिति ॥

मनोवाक्कायैर्यतीन्द्रं सेवमानानां कूराधिनाथप्रभृतीनां पादानुचि-

अष्टाक्षराख्यमनुराजपदत्रयार्थनिष्ठां ममात्र वितराद्य यतीन्द्रनाथ।
शिष्टाग्रगण्यजनसेव्यभवत्पदाब्जे हृष्टाऽस्तु नित्यमनुभूय ममास्य बुद्धिः ॥ ५ ॥

---

न्तनफलं तदनुष्ठानानिष्ठतेत्युच्यते। हे यतीन्द्र, मे–अप्राप्तविषयप्रवणकरणत्रययुक्तस्य मम, मनः–चञ्चलं हीत्यादिना चञ्चलत्वेन ख्यापितं हृदयं वर्त्म, तव–प्राप्ततमस्य सुलभस्य च शेषिणस्तव, दिव्यवपुषः परमभोग्यविग्रहस्य, स्मृतौ स्मरणे, नित्यं, सक्तं–सङ्गयुक्तं इच्छाविशेषयुक्तं भवत्विति प्रार्थना। मे इत्युत्तरत्र स्थानत्रयेऽप्यनुषज्यते। असौ–अप्राप्तविषयप्रावण्यवशेन विप्रकृष्टा, मे, वाक् वागिन्द्रियं कर्तृ, तवेत्यपि स्थानत्रयेनुषञ्जनीयं, तव कीर्तनीयतमस्य तव, गुणानां–सौशील्यसौलभ्यादीनां सौन्दर्यसौकुमार्यादीनां च गुणानां, कीर्तने भावबन्धपुरस्सरं सम्यगुच्चारणे, कृतसंशब्दन इति हि धातुपाठः। सक्ता भवतु–सक्तमित्यनुषक्तस्य लिङ्गविपरिणामः, भवत्विति चानुषङ्गः, अदसस्तु विप्रकृष्टमित्यनुशासनाद्विप्रकृष्टवाचित्वमदश्शब्दस्य द्रष्टव्यम्; मे करद्वयस्य च–असेव्यसेवानिरतस्य मम करयुगस्य च, तव दास्यकरणन्तु परिचरणीयस्य तव दासकर्मनिष्पादनमेव, कृत्यमन्तु–अवश्यानुष्ठेयमस्तु, चकारोवाऽनुक्तसमुच्चायकः करणान्तं समुच्चिनोति। मे करणत्रयं–त्वद्विषयस्मरणकीर्तनदास्यकरणसक्ततया प्रार्थितं मदीयं मनोवाक्कायरूपकरणत्रयं, वृत्त्यन्तरे त्वत्स्मरणादित्रितयव्यतिरिक्तव्यापारेषु विमुखं चास्तु, न केवलं त्वत्स्मरणादिसक्तं, किन्तु त्वदन्यविमुखमप्यस्त्विति प्रार्थना; तुशब्दोऽवधारणार्थकः ॥ ४ ॥

अष्टाक्षरेति॥ एतच्छ्लोकप्रभृतिसर्वं पूर्वश्लोकस्य विवरणं, श्रीमन्यतीन्द्रतवदिव्यपदाब्जसेवामिति तु स्तोत्रार्थोपसंहारः, विज्ञापनमित्यादिश्लोकरूपकमोपसंहारमध्यैरुपपादितार्थस्य हेतूक्तिपूर्वकं द्रढीकरणमिति बोध्यम्। नाथ–अस्मत्स्वामिन् यतीन्द्र, अत्र–अज्ञानान्ध-

कारावहे संसारमण्डले, अद्य कलिसाम्राज्यकाले, मम प्रथमपर्वनिष्ठावितरणस्याप्यनर्हस्य मे, अष्टाक्षराख्यस्य अष्टाक्षर इति प्रथितस्य 'न मन्त्रोऽष्टाक्षरात्परः' 'गतिरष्टाक्षरो नृणां' 'बीजमष्टाक्षरस्य स्यात्' इत्यादिषु तत्प्रसिद्धिरभिप्रेता। अष्टाक्षरास्येति निर्देशश्च स्वापेक्षिततदीयशेषत्वप्रतिपादकानां उकारनमःपदनारायणपदानां सद्भावाभिप्रायेण कृतः। मनुराजस्य मन्त्रवरस्य मूलमन्त्रस्य; तस्यैव हि 'गृह्णीयान्मन्त्रराजानं' इति मन्त्रराजत्वं प्रसिद्धं, पदत्रयस्य प्रणवनमश्शब्दनारायणपदात्मकविशिष्टार्थपरत्वोपाधिकलितत्वसङ्घातयुक्तपदसङ्घातरूपस्यार्थानां तदीयपर्यन्तानन्यार्हशेषत्वानन्यशरणत्वानन्यभोग्यत्वरूपाणां अभिधेयानां निष्ठां निष्पत्तिं त्वयि पर्यवसानरूपमन्तं वा, 'निष्ठानिष्पत्तिनाशान्ताः' इति कोशः; पदत्रयार्थेषु पूर्वोक्तेषु नितरां स्थितिं नैयत्यं वा; वितर देहि, नाथत्वाद्वितरणं युक्तमिति भावः, वितरणस्य चाप्रकर्तृपर्यवसन्नस्वत्वकरत्वाच्चतुर्थीनिर्देशविरहः, शेषगतातिशयो हि शेषिण एवेति भावः। निष्ठावितरणफलमाह—शिष्टेत्यादिना; शिष्टाः तत्वहितपुरुषार्थेषु भ्रमरहितास्तेषामग्रगण्यास्तत्त्वहितपुरुषार्थयाथात्म्यं तदीयपर्यन्तं त्वद्विश्रान्तमिति प्रमावन्तः कूरनाथादयः; ते च ते मनाक्समीचीनोत्पत्तिमन्तस्तेषां, सेव्ये परिचरणीये, भवतः चरमशेषिणस्तव, पदाब्जे पद्मसदृशौ चरणौ, नित्यमनुभूय, अस्य मम—प्रथमपर्वणोऽप्ययोग्यस्य मे, बुद्धिर्हृष्टाऽस्तु—अनुभवफलैः कृतपन्नामजनितहर्षप्रकर्षवती भवत्विति प्रार्थना। अत्र श्लोके पूर्वोत्तरार्धाभ्यां मूलमन्त्रपदत्रयं यतीन्द्रपर्यन्तसत्तात्पर्यकमित्युक्तं भवति; मन्त्रराजत्वं नृसिंहानुष्टुभे 'तस्मा एतं मन्त्रराजं नारसिंहानुष्टुभं प्रायच्छत्' इत्यादिषु प्रसिद्धमिति नद्यावर्तनायाष्टाक्षरास्येत्येतदपि वदन्ति ॥ ९ ॥

दिव्यवपुस्स्मृतौ मनस्समक्षं भवतु, वृत्त्यन्तरेऽस्तु विमुखं करणत्रयं प्रति व्यावृत्तं मनसः प्रासादिवदप्रादप्रदिरहं अप्राप्तविषयमाघ्यं

अल्पापि मे न भवदीयपदाब्जभक्तिश्शब्दादिभोगरुचिरन्वह-
मेधते हा। मत्पापमेव हि निदानममुष्य नान्यत्तद्वारयार्य
यतिराज दयैकसिन्धो ॥ ९ ॥

---

च सहेतुकं निवर्तयेत्याह—अल्पापीति ॥ दयायाः स्वार्थानपेक्ष-परदुःखासहिष्णुतायाः, एकसिन्धो अद्वितीयसमुद्रभूत, एतेन दयाया निर्हेतुकत्वं अक्षय्यत्वञ्च; आर्य आचार्य, अज्ञातज्ञापनादिभिर्मदुज्जीवनकारिन् वैदिकाग्रेसरेति वाऽर्थः, मम प्राप्यभूतेति-वाऽर्थः; हलोर्ण्यदिति ऋगतावित्यस्मात् ण्यत्प्रत्यये ह्यार्यशब्दो निष्पन्नः। अद्येत्यपि केचित् पठन्ति, तदाऽद्यैवेत्यर्थः; हाशब्दव्यञ्जिता परमार्तिरनेनोक्ता भवतीति द्रष्टव्यम्। अल्पाऽपि किञ्चिदपि, भवदीययोः प्राप्तसुलभभोग्यतमत्वत्सम्बन्धिनोः पदाब्जयोः पद्मवत्पावनभोग्ययोः स्वरूपोचितयोश्च पादयोर्भक्ती रुचिर्मे मम न नास्तीत्यर्थः; शब्दादीनामप्राप्तहेयविषयाणां, आदिशब्देन स्वर्गादीनां सङ्ग्रहः, भोगे तज्जन्यसुखसाक्षात्कारे रुचिरभिप्रीतिरन्वहमहन्यहनि एधते वर्धते, हा प्राप्तविषयप्रावण्यविरहाप्राप्तविषयप्रावण्यवृद्ध्योर्दुःख्यत इत्यर्थः, भोगरसिकतया शब्दादिरुचिमतो मम कथमतिशयितभोगवैमुख्यमिति विस्मयो वा हाशब्दार्थः; अमुष्य प्राप्ताप्राप्तविषयाप्रावण्यप्रावण्य-द्वयस्य, निदानमादिकारणं, मत्पापमेव, मदीयमनादिदुरितमेव, भवतीति शेषः; एवकारेण-'द्विषन्तः पापकृत्याम्' इत्युक्तरीत्याऽन्यानुष्ठितमन्वा-सञ्चितं पापं व्यावर्त्यते, नान्यत्; ईश्वरस्वातन्त्र्यं लीलारसबुभुक्षा-दिकञ्च नास्य निदानमित्यर्थः, निदानमिति पूर्वस्मादनुषज्यते, तत् मत्पापं वारय निवर्तय; यद्वा-त्वत्पदाब्जविषयरुचिविरहश्शब्दादि-विषयरुचिः, तन्निदानं पापञ्चेति पूर्वोक्तत्रितयं वारयेत्यर्थः। तदित्यत्र त्यदादीनिसर्वैर्नित्यमिति तच्छब्दशेषे जातावेकवचनञ्च, भवदीय-

वृत्त्या पशुर्नरवपुस्त्वहमीदृशोऽपि श्रुत्यादिसिद्धनिखिलात्मगुणाश्रयोऽयम् । इत्यादरेण कृतिनोऽपि मिथः प्रवक्तुमद्यापि वञ्चनपरोऽत्र यतीन्द्र वर्ते ॥ ७ ॥

---

पदाब्ज इत्यत्र भवदीयाना पदाब्जान्यप्यत्यर्थ इत्यपि वदन्ति ; आलवन्दारपादानुचिन्तनपर इति प्रक्रमानुगुण्यमिति तदाशयः ॥ ६ ॥

कृत्स्नश्च दास्यकरणमित्यनेन ध्वनितमप्राप्तवृत्तिनिरतत्वं निवर्तयेत्याह—वृत्त्येति ॥ हे यतीन्द्र, वञ्चनपरः परभ्रमोत्पादनैकनिरतः, अहं निर्जितेन्द्रियग्रामस्य तव प्रतिकोटिभूतोऽहं, इन्द्रियाधीन इति यावत् ; नरवपुर्मनुष्यशरीरः, पशुरिति वृत्त्या व्यापारेण ज्ञायते ; वृत्तिज्ञाप्यनरपशुत्ववानित्यर्थः, तुशब्द एवकारार्थः ; ईदृशोऽपि एवम्भूतोऽपि ; दार्ढ्यार्थं पुनरनुवादः, स्वतन्त्रसर्वज्ञस्यापि यतीन्द्रस्य स्वस्मिन् वक्ष्यमाणभ्रमाशङ्कया वा वृत्त्यापशुरितिविधिः श्रुत्यादिभिः, शान्तोदान्त उपरत इत्यादिश्रुतिभिः, 'अहिंसा सत्यमक्रोधः शौचमिन्द्रियनिग्रहः । दानं दमः क्षमा विद्या सर्वेषां मुनिभिः स्मृतम्' इत्यादिभिः, 'अष्टावात्मगुणाः' इत्यादिभिश्च स्मृतिभिः, सिद्धाः बोधिताः, निखिला अशेषाः, आत्मगुणाः स्वाश्रयभूतात्मस्वरूपोत्कर्षावहाः शमदमादयः, तेषामाश्रयः ; इदमुद्देश्यसमर्पकम् ; अयं बुद्धिस्थो वरवरमुनिः, इदन्तु विधेयसमर्पकं, इति आदरेण आत्मप्राप्तिरूपाभिनिवेशेन नरयन्त्यार्थमारोपयन्त्वित्यर्थः ; कृतिनोऽपि मिथः प्रवक्तुं निरूपका अपि यथाऽन्योन्यं बोधयन्तः परस्परमित्युक्तरीत्याऽस्वरूपधर्मप्रवचनप्रवचनं कुर्युस्तथाऽत्र विप्रलिप्सादिगन्धविधुरसूरनाथादिपरमर्षिगोष्ठीने श्रीरङ्गे वर्ते तिष्ठामि । अत्र तद्वारयेति पूर्वस्मादनुषज्यते, तथा च—एतादृशं मम विप्रलम्भकत्वं निवर्तयेत्यर्थः ; प्रायिकत्वनिवृत्त्यर्थं निखिलशब्दः, अन्यस्यापीदृशत्वव्यावृत्त्यर्थं श्रुत्यादिसिद्धनिखिलात्मगुणाश्रयमुद्दिश्य अयमिति तादात्म्येन विधिः,

दुःखावहोऽहमनिशं तव दुष्टचेष्टश्शब्दादिभोगनिरतश्शरणागतास्य । त्वत्पादभक्त इव शिष्टजनौघमध्ये मिथ्याचरामि यतिराज ततोऽस्मि मूर्खः ॥ ८ ॥

---

तेन चाहृश्यतावच्छेदकव्यापकत्वं विषये भासत इति व्यापकनिवृत्त्या व्याप्यनिवृत्तिसिद्धिः, कृतिन प्रवक्तु वर्ते इत्यत्र तुमुन्ण्वुलौ; क्रियायां क्रियार्थायामिति सूत्रेण तुमुन्, तद्धि सूत्रं भिन्नकर्तृकक्रियाबोधकादपि धातोस्तुमुन्विधायकं, न ह्यत्र समानकर्तृकग्रहणं कृतं; तत्तत्रत्र बहुसूत्रव्यवहिते समानकर्तृकेषु तुमुनिति सूत्रे कृतं, 'समानकर्तृकेष्विति विशेषं सार्पयितमयमारम्भ इति हि तद्व्याख्यातृभिश्चिरन्तनैरुक्तम् । अनेन तुमुन्ण्वुलाविति सूत्रेण भिन्नकर्तृकक्रियाबोधकादपि धातोस्तुमुन्भवतीत्युक्तं भवति, प्रयोगाश्च भिन्नकर्तृकस्थले दृश्यन्ते, यथा–'वस्तुं वा कश्चिदन्तर्वसति वसुमतीदक्षिणस्सप्ततन्तु '–इति मुरारिणा प्रयुक्तम् । अत्र करणकर्तृत्वं मुनेः; वासकर्मत्वं सप्ततन्तोरिति भिन्नकर्तृकत्वम् । भगवता भाष्यकृता च योगिन प्रति स्मर्यते––'स्मार्ते चैते' इतिसूत्रभाष्ये––'देवयानपितृयानाख्ये गती स्मर्येते, योगाङ्गतयाऽनुदिनं स्मर्तुं' इति प्रयुक्तम् । तत्र चैकं स्मरणं स्मृतिकारकर्तृकं, अपरन्तु योगिकर्तृकमिति भिन्नकर्तृकत्वम् । भट्टारकैश्च–'श्रीरङ्गचन्द्रमसमिन्दिरया विहर्तुं विन्यस्य' इति प्रयुक्तं; अत्र विहारकर्तृत्वं भगवत, विन्यासकर्तृत्वन्तु सेनान्य इति भिन्नकर्तृकत्वम् । नन्वेषां प्रयोगाणां क्लेशेनापि समानकर्तृकविषयत्वसमर्थनं न्याय्यं, मानाभावात् । एतेन मनोरमोक्त तुमुन्ण्वुलावित्यस्यापि समानकर्तृकत्वानियततुमुन्विषयकत्वं निरस्तं, अत्र च प्रधानशक्त्यभिधानगुणशक्तेरभिहितवत्प्रकाशादनभिहिताधिकरणविहितयोस्तृतीयाषष्ठ्योरसाधुत्वात्कर्त्रर्थे प्रातिपदिकार्थमात्रे वा कृतिन इत्यत्र प्रथमायास्साधुत्वं बोध्यं, यद्वा कृतिन इति षष्ठ्यन्तं जात्येकवचनान्तं च, अथवा व्यक्तावेवैकवचनान्तं, मिथःपदन्तु रहसीत्यर्थकमिति द्रष्टव्यम् ॥ ७ ॥

नित्यन्त्वहं परिभवामि गुरुं च मन्त्रं तद्देवतामपि न किञ्चिदहो बिभेमि । इत्थं शठोऽप्यशठवद्भवदीयसङ्घे हृष्टश्चरामि यतिराज ततोऽस्मि मूर्ख. ॥ ९ ॥

मदीयमप्राप्तवृत्तिनिरतत्वं तवैव दुःखहेतुत्वात्त्वयाऽवश्यनिवर्त्यमित्याह—दुःखेति ॥ हे यतिराज विहितविषयविरक्तगोविन्दाह्वप्रभृतीनामपि रक्षक, शरणागतारूय. प्रपन्न इति नाममात्रवान्तु तदधिकारभूतानन्यगतित्ववान् नापि तत्सम्भावितस्वभावभूतानुकूल्यादिमानित्यर्थः ; तदाह शब्दादीति-शब्दादिभोगे निरतः नियत , दुष्टा शास्त्रनिषिद्धतया निष्ठाभङ्गकत्वरूपदोषदूषिता चेष्टा सदसदाचारनिवृत्तिप्रवृत्तिरूपा यस्य ॥ तथोक्तः, अत एव निशं तव दुःखावहः प्रतिकूलकारिशरणागताख्यत्वशब्दादिभोगनिरतत्वाभ्यां त्यागस्वीकारयोर्विचिकित्साद्दुःखकर इति वाऽर्थः । अहं त्वत्पादभक्त इव, न केवलं भगवत्प्रपन्न इव किन्तु परमप्रपन्न इव शिष्टजनानामिष्टसाधनांशे भ्रान्तिगृहीतानां कूरकुलोत्तमदासप्रभृतीनामीदृश्य परिषद. मध्ये, न तु कनिष्ठकोण इत्यर्थः, मिथ्याचरामि—अयथाभूताचारवान्भवामि, "मिथ्याचारस्स उच्यते" इति भगवदुक्तेरहमेव मुख्यविषय इत्यर्थः । मिथ्या अयथार्थाधिकारस्सन् चरामि सञ्चरामीति वाऽर्थः । मदीयदुराचारसमीक्षायां हि मम शिष्टगोष्ठीमध्याद्बहिष्करणमेव न्याय्यमिति भावः, यत एवं ततोऽहं मूर्खोऽस्मि बालिशोऽस्मि, मूर्खवैधेयबालिशा इति कोशः, मूर्छनान्मूर्खः मूर्छनं मोहः, मूर्छा मोहसमुच्छ्राययोरिति हि धातुपाठः ; अनेन पूर्वोक्तव्याहतानाचारादकृत्यमोहभरितत्वमुक्तं भवति, अत्रापि तद्वारयेति वर्तते—तथा चोक्तविधं मौर्ख्यं निरसयेत्यर्थः ॥ ८ ॥

वाग्गुणकीर्तनेऽप्यसावित्यादिना सूचितं वागिन्द्रियस्य विपरीतवृत्तं तदुपपादकं मौर्ख्यञ्च निवर्तयेत्याह—नित्यंत्विति ॥ हे यतिराज अहं गुरुं अज्ञानज्ञापनादिना महोपकारकरमाचार्यं, योऽसौ मन्त्रवरं

हा हन्त हन्त मनसा क्रियया च वाचा योऽहं चरामि सततं त्रिविधापचारान्। सोऽहं तवाप्रियकरः प्रियकृद्वदेव कालं नयामि यतिराज ततोऽस्मि मूर्खः ॥ १० ॥

---

प्रागादित्युक्तरीत्या तदुपदिष्टं मूलमन्त्रं तस्य मन्त्रस्य देवतामपि प्रतिपाद्य देवताभूतमीश्वरञ्च नित्यन्तु परिभवामि, नित्यमेव परिभवामि तिरस्करोमि अवजानामीत्यर्थः। तत्र गुरुपरिभवो-यथोपदेशं त्याज्योपादेययोस्त्यागोपादानाननुष्ठानं ख्यातिलाभादिप्रयोजनार्थेनानाधिकारिभ्यस्तदुपदिष्टमन्त्रवरोपदेशश्च; मन्त्रपरिभवश्च-तदर्थविस्मृतिविपरीतार्थप्रतिपत्तिश्च; देवतापरिभवस्तु-तद्दत्तकरणत्रयस्य तद्विषये विनियोगविरहोऽन्यत्रविनियोगश्चेति पूर्वाचार्यसूक्तिष्वनुसन्धेयम्। किञ्चिदपि न बिभेमि-उक्तगुरुमन्त्रदेवतापरिभवप्रयुक्तभाव्यनर्थाशङ्कनमीषदपि मम नास्तीत्यर्थः। अहो इति विस्मये, लोके क्वापीदृशपापप्राचुर्यं निर्भीकत्वञ्च न दृष्टचरमिति भावः। इत्थमुक्तरीत्या शठोऽपि गूढविप्रियकृदपि, गूढविप्रियकृच्छठइत्युक्तेः। यद्वा शठोऽपि शास्त्रप्रामाण्यबुद्धिशून्यतया नास्तिकोऽपि "शठचित्तशास्त्रवशतोपायोऽभिचारश्रुतिः"-इत्युक्तेः। अशठवद्बहिरन्तश्चैकरूप्येण प्रियकृदिव परमास्तिक इव वा, भवदीयानां भवदेकनिरूपणीयानां परमास्तिकानां सङ्घे समूहे हृष्टस्सन् मदीयं विप्रियकृत्त्वमेषां गूढमिति हर्षयुक्तस्सन् चरामि सञ्चरामि; यत एवं ततोऽहं मूर्खोऽस्मि मूढोस्मि, तद्वारयेति च वर्तते, तथा च मम गुरुपरिभवादिवागिन्द्रियदुर्वृत्तिं निवर्तयेत्यर्थः ॥ ९ ॥

मनसो दुर्वृत्तिं तत्प्रयोजकं मौर्ख्यञ्च निवर्तयेत्याह—हाहन्तेति॥ हे यतिराज योऽहं मनसा वाचा क्रियया च मनोवाक्कर्मभिः करणैः, तिस्रो विधाः प्रकारा भगवदपचारभागवतापचारत्वासह्यापचारत्वरूपापचारविभाजकोपायो येषान्ते तथोक्तास्तथाविधानपचारान् विप्र-

पापे कृते यदि भवन्ति भयानुतापलज्जाः पुन करणमस्य कथं घटेत । मोहेन मे न भवदीयभयादिलेशस्तस्मात्पुन पुनरघं यतिराज कुर्वे ॥ ॥११॥

तीकारकरव्यापारान् सततमविच्छेदेन चरामि अनुतिष्ठामि । सोऽहं, तवाप्रियकरस्सन् परमकारुणिकस्य परमवत्सलस्य च तवानिष्टकरणैकशीलस्सन्, प्रियकृद्वदिष्टैककरणशील इव, एवकारेणाप्रियकरत्वमीपदपि न स्फोर्यत इत्युच्यते; कालं नयामि–सिद्धसाधननिष्ठाधिकारिणो हिताशेऽनन्ययादनुभवकैङ्कर्यरूपप्रियैकान्वयेन यथा कालक्षेपं कुर्वन्ति तथाऽहं कालक्षेप करोमि, हा हन्त हन्तेति निपातत्रयमपि दु खातिभूमौ वर्तते, अपचारत्रयानुसन्धानेन तत्प्रयुक्तदु खत्रयं वा तत्तत्प्रतिनियतं निपातत्रयेण द्योत्यते, यत एवं ततोऽहं मूर्खोऽस्मि पूर्वापरव्याहतवृत्तिप्रयोजकदुर्मोहभूयिष्ठोऽस्मि, अत्रापि तद्वारयेति वर्तते; तत्त्रिविधापचाराचरणं तत्प्रयोजकमज्ञानञ्च निरर्तयेत्यर्थ । त्रिविधापचारस्वरूपविवेचनन्तु पूर्वाचार्यसूक्तिष्वनुसन्धेयं, वृत्त्यापशुरित्यादिषु श्लोकेषु प्रतिश्लोकं करणत्रयदोषप्रतिपादनेऽपि प्राधान्यादेकैकपरत्वमिति; वृत्त्या पशुर्नरवपुः गुरुं परिभवामि, मनसा क्रियेति प्रथमनिर्देशादवगम्यत इति द्रष्टव्यं, योऽहमस्मि सस्त्यन इत्युपादेययोर्हनिर्देशाप्रतिपक्षोऽय योऽहघरामीति सर्वायोऽहानिर्देश इति हृदयस्थितोऽर्थ । सिवारं मूर्ग इत्युक्तिर्भक्ताङ्घ्रिरेणुसूक्ति भट्टारकसूक्तिश्चाभिप्रेत्येति बोध्यम् ॥१०॥

शरणागतनाममात्रवतोऽप्यकृत्यकरणादौ भयलज्जयोरसत्यो पुनरचरणं कृतांशस्य तु पश्चात्तापेन निवृत्तिरपि भवतीति किमत्र मया करणीयमस्तीति यतीन्द्राभिप्रायमुत्प्रेक्ष्याह—पाप इति ॥ हे यतिराज–पापे कृते सति मे मम, भयं भगवन्निग्रहादृत्तं, अनुताप कृतानुसन्धानेन हृदयतोदविशेष, लज्जा निन्दागमनप्रयुक्तायत्तहृ:

अन्तर्बहिस्सकलवस्तुषु सन्तमीशमन्धः पुरस्स्थितमिवाहमवीक्षमाणः। कन्दर्पवश्यहृदयस्सततं भवामि हन्त त्वदग्रगमनस्य यतीन्द्र नार्हः ॥ ॥१२॥

---

यद्वृत्तिसङ्कोचविशेषः, इमाः भयानुतापलज्जाः भवन्ति यदि उत्पद्यन्ते चेत्, अस्य पापस्य, पुनःकरणं पुनरनुष्ठानं, मे मम, कथं घटेत केन हेतुना उपपद्येत। अत्र भयादीनां त्रयाणां पुनः करणप्रतिबन्धकत्वं, अनुतापस्य तु कृतांशशोधकत्वमपीति विवेकः; भयादीनां पुनःकरणविरहस्य च हेतुहेतुमद्भावोऽतिस्फुट इति तस्य शब्देनाविवक्षणाद्धेतुहेतुमतोर्लिङिति सूत्रविहितलिङो न प्रयोगः; अद्य भयाद्युत्पत्तावपि पुनःकरणं न भविष्यतीत्यभिप्रायेण भवन्तीति लटः प्रयोग इति बोध्यम्। इह पापकरणे सति भयादीनां पूर्वोक्तानां लेशास्स्वल्पांशोऽपि मोहेन अभोग्येषु भोग्यत्वबुद्ध्याद्यन्यथाज्ञानेन, मे मम, न भवति नोत्पद्यते; तस्माद्भयाद्यनुत्पादनाद्धेतोरघं मूलघातिदुरितं, हन्तीत्यघमिति व्युत्पत्तेः; पुनःपुनः कुर्वे करोमि। आत्मनेपदेन तत्फलानुभवो मम दुर्वार एवेत्युच्यते, समग्रभयाद्युत्पत्तौ पुनःकरणाभावः, भयादिलेशोत्पत्तौ च पुनःपुनःकरणाभावः; अत्र तु तल्लेशस्याप्यनुत्पादनात्पुनःपुनःकरणमित्यभिप्रायेण वीप्सेति बोध्यम्; अत्रापि तद्वारयेति वर्तते, तद्भयाद्यनुत्पत्तिप्रयोजकमज्ञानं निवर्तयेत्यर्थः ॥११॥

तर्हि मत्सन्निधिमेहीति यतीन्द्राभिप्रायमुन्नीय तस्याप्यनर्ह इति वदन्, वृत्त्यापशुरित्युक्तं विवृणोति—अन्तरित्यादिना ॥ हे यतीन्द्र, अहं सकलवस्तुषु स्वस्वज्ञानव्यतिरिक्तसर्ववस्तुषु अन्तर्बहिश्च सन्तं तिष्ठन्तमीशं नियन्तारं भगवन्तं नारायणं कर्म, पुरस्स्थितं सन्निकृष्टमनावृतञ्च पुरुषमन्ध इव चक्षुर्हीन इव अवीक्षमाणस्सन् अपश्यन्सन्, लक्षणहेत्वोरित्यादिना हेत्वर्थदर्शानच्; कन्दर्पस्य मन्मथस्य वश्यमधीनं हृदयं यस्य स तथोक्तः, तथाविधस्सततं भवामि।

तापत्रयीजनितदुःखनिपातिनोऽपि देहस्थितौ मम रुचिस्तु न तन्निवृत्तौ । एतस्य कारणमहो मम पापमेव नाथ त्वमेव हर तद्यतिराज शीघ्रम् ॥ ॥ १२ ॥

यत एवं ततस्त्वदग्रगमनस्य—आत्मपदाश्रितानां कामादिदोषहरस्य तव, अग्रगमनस्य पदाश्रितशब्दोक्तसन्निधिगमनस्य, नार्हः नःयोग्यः ॥ अत्र भवामीत्यनुषङ्गः अन्तस्सन्तमीशमवीक्षमाणः, यत एव कन्दर्पवश्यहृदयोऽहं तत एव त्वदग्रगमनस्यार्हो न भवामीत्येकवाक्यतयैव योजनीयं; मनसोऽन्यायत्तत्वे हि स्वाधीनप्रवृत्तिर्दुर्लभेति भावः ॥ एवं कामप्रवणस्य मम त्वदग्रगमने सति तवातिजुगुप्सा स्यादिति वाऽऽशयः। ईशमवीक्षमाण इत्यत्र च—अन्तर्यामिप्रकाशात्कामप्रावण्यानुदयस्य गोविन्दाह्वे प्रतियोगिप्रसिद्धिरभिप्रेता, सततमित्यनेन च—अप्राप्तविषयप्रवणानां यतीन्द्रसन्निधिना निरस्तकामप्रावण्यानां रङ्गालयगायनसूनुप्रभृतीनां व्युदासः; कन्दर्पवश्यत्वञ्च वृत्त्यापशुरित्यत्राभिप्रेतं; जनन्यामितरत्र च अविशेषदृष्टिरूपं विवक्षितं, तथैव नृपशुरित्यत्र पूर्वाचार्यैर्व्याख्यानादन्तर्बहिस्सन्तमीशं अन्धः पुरस्थितमिवावीक्षमाण इत्यत्र "तद्यथा हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि सञ्चरन्तो न विन्दन्ति एवमिमाः प्रजा अहरहर्गच्छन्त्यः" इत्यादिश्रुतिरनुसन्धेया ॥ १२ ॥

सर्वस्यापि पूर्वोक्तस्य दोषजातस्य देहानुवृत्तिरुचिरेव हि मूलं, तां च देहदोषानुसन्धानेन त्वमेव जहीहीति यतीन्द्राभिप्रायमुन्नीयाह—तापत्रयीति॥ हे यतिराज, तापानामाध्यात्मिकाधिभौतिकाधिदैविकात्मकानां गर्भवासशीतोष्णयाम्ययातनालक्षणानां, त्रय्या त्रयेण जनितेषूत्पादितेषु दुःखेषूच्चावचेषूत्कृष्टेषु निपातिनोऽपि निपातनशीलस्यापि ताच्छीलिकणिनिप्रत्ययेन च पतनाङ्गमप्युत्पतनं नास्तीत्युच्यते, अपिशब्देन देहदोषानुसन्धानमकिञ्चित्करमिति लभ्यते । मम तु लोकविलक्षणस्य

वाचामगोचरमहागुणदेशिकाग्र्यकूराधिनाथकथिताखिलनैच्य-
पात्रम् । एषोऽहमेव न पुनर्जगतीदृशस्तद्रामानुजार्य करुणैव
तु मद्गतिस्ते ॥ ॥ १४ ॥

मम, लोके हि तद्दोषदर्शनं तद्विरामहेतुः; मम तु तवेति भावः । देहस्य उपचयोपलक्षितसर्वहेयविकारास्पदस्य, दिहउपचय इति हि धातुपाठः; उक्तञ्च—"यदि नामास्य कायस्य यदन्तस्तद्बहिर्भवेत् । दण्डमुद्यम्य लोकोऽयं शुनः काकांश्च वारयेत्"—इति । स्थितौ नित्यसत्तायां, रुचिरभिप्रीतिर्भवतीति शेषः । तन्निवृत्तौ तस्य देहस्य निवृत्तौ नाशे, न तु निवर्तन इति भावः । न रुचिः द्वेषः, भवतीति शेषः, नञत्र विरोधिवाचकः, अरुचेर्हि द्वेष एव स्वतो भाविन्यामपि तन्निवृत्तौ द्वेषवतो मम कुतस्तत्स्थित्यभिरुचिनिवर्तनमिति भावः । एतस्य देहस्थितिरुचेस्तन्निवृत्त्यरुचेश्च, एतस्येति च सामान्ये नपुंसकं जात्येकवचनञ्च; कारणं उत्तेजकतया हेतुः । दुःखजनकत्वलक्षणदोषदर्शनं हि रुचिप्रतिबन्धकं, तत्प्रतिबन्धकं तु पापमेव भवतीत्युत्तेजकत्वं पापस्य द्रष्टव्यं, इदमुद्देश्यसमर्पकं; मम पापमेव मदीयं दुरितमेव नान्यदीश्वरस्वातन्त्र्यादिकं; इदन्तु विधेयसमर्पकं, भवतीति शेषः । अहो इति दुःखातिशये, तत् देहस्थितितन्निवृत्तिरुच्यरुचिनियामकं पापं कर्तुं नाथ शेषिन्, त्वमेव, शक्तः, प्राप्तश्च त्वमेव, न त्वशक्तोऽप्राप्तश्चाहमित्यर्थः; शीघ्रमुत्सरक्षण एव, हर नाशय, हृञ् हरणे, हरणं नाशनमित्युक्तं; शब्दादिभोगरुचिप्रयोजकपापापेक्षयाऽपि देहानुवृत्तिरुचिप्रयोजकपापस्य क्रौर्यख्यापनाय शीघ्रपदं प्रयुक्तं; इत्थं प्रार्थयमानायाप्यस्मै भगवता यतिराजेन अद्यैव देहनिवृत्त्यकरणमनेन लोकोज्जिजीविषयेति बोध्यम् ॥ १३ ॥

एतावताऽप्युद्गारेण स्वदोषः कियानपि नोक्त इत्यभिप्रायेण "अद्भ्यस्सम्भूतो हिरण्यगर्भ इत्यष्टौ" इतिवत् पूर्वाचार्यप्रबन्धस्थं दोषकथनमत्र पठनीयमित्याह—वाचामिति ॥ हे रामानुजार्य, वाचा-

शुद्धात्मयामुनगुरूत्तमकूरनाथभट्टाख्यदेशिकवरोक्तसमस्तनै-
च्यम् । अद्यास्त्यसङ्कुचितमेव मयीह लोके तस्माद्यतीन्द्र
करुणैव तु मद्गतिस्ते ॥ ॥ १५ ॥

मगोचरा अपरिच्छिन्ना महान्तः प्रत्येकमपि निस्सीमानो गुणाः क्षमादयाद्यात्मगुणा यस्य स तथोक्तस्तथाविधदेशिकानां वेदान्तप्रवचनमूर्धाभिषिक्तानां, अग्रचरश्रेष्ठस्स चासौ कूराधिनाथश्श्रीवत्सचिह्नमिश्रस्तेन कथितस्य पञ्चस्तव्यां विस्तरेणोक्तस्य अखिलस्याशेषस्य नैच्यस्य हतकत्वादेर्नीचधर्मस्य पात्रमाश्रयः, एषोऽहमेव पूर्वोक्तदोषाश्रयोऽहमेव, ईदृशः पुनरेतादृशस्तु, जगति न लोके नास्ति; यत एवं तत्तस्मात्ते तु करुणैव कारुणिकत्वे विश्वविलक्षणस्य तव कृपैव मद्गतिर्भवति, विश्वोत्तीर्णदोषनिधेर्ममोज्जीवनोपायो भवति; भवतीति चाध्याहारः। एवकारान्यनिषेधौ दार्ढ्यार्थौ। वाचामगोचरमहागुणेत्यादिविशेषणोपादानञ्च तदुक्तनैच्यस्य तत्र निवेशासामर्थ्यादानन्तर्यमचोदनेति न्यायेन योग्ये मय्युत्कर्ष इति व्यञ्जनाय, स्वस्य तद्योग्यताविष्करणाय तु एष इति विशेषणं; देशिकाग्रचेत्यत्र च 'आद्यं यतीन्द्रशिष्याणामग्र्यं वेदान्तवेदिनाम्' इत्येतदनुसन्धेयम्; "कृतापराधस्य हि ते नान्यत्पश्याम्यहं क्षमम् । अन्तरेणाञ्जलिं बध्वा लक्ष्मणस्य प्रसादनात्"-इत्युक्तदिशा सापराधजनसञ्जीवनोपायप्रसादयत्त्वं रामानुजस्यैव प्राप्तमित्यभिप्रायेण रामानुजार्येति निर्दिष्टमिति बोध्यम् । अत्र 'हा हन्त हन्त हतकोऽस्मि खलोऽस्मि' इत्यादिकं पद्यस्तवीगतं श्लोकजातमनुसन्धेयम् ॥ १४ ॥

पुनरपि प्रबन्धान्तरस्थं तत्तद्दोषकथनमत्रानुसन्धेयमित्याह—शुद्धात्मेति ॥ हे यतीन्द्र, इह लोके सापराधजनभूयिष्ठे भूलोकेऽद्य कलिसाम्राज्यकाले, शुद्धस्तानुसंहितदोषशून्य आत्मा स्वरूपं येषान्ते तथोक्तास्तथाविधैः, शिलापुत्रकस्य शरीरमितिवत् शुद्धात्मेति महर्षिर्निर्देशः।

शब्दादिभोगविषया रुचिरस्मदीया नष्टा भवत्विह भवद्दयया यतीन्द्र । त्वद्दासदासगणनाचरमावधौ यस्तद्दासतैकरसता ऽविरता ममास्तु ॥ ॥ १६ ॥

यामुनगुरुः यामुनाचार्यः, उत्तमकूरनाथः आत्मगुणपूर्णेषु सर्वोत्कृष्टः श्रीवत्सचिह्नमिश्रः, भट्टाख्यदेशिकवरस्तत्सुतश्श्रीरङ्गभर्त्रा स्वयं भट्टपराशरेति फणितस्सर्वपूर्वाचार्यप्रकृष्टवैभवो भट्टार्य इत्येतैरुक्तं स्तोत्ररत्नसमस्तत्व्योः प्रतिपादितं समस्तमखण्डं नैच्यममर्यादत्वादिकं नीचधर्मजातं मय्येव असङ्कुचितमस्ति, अन्यत्र तु सङ्कुचितमेवास्ति; यत एवं तत्तस्मात्ते करुणा तु वैपुल्यातिशयेन विश्वविलक्षणा त्वत्कृपा मद्गतिरेव भवति, अहं गतिर्विषयो यस्यास्सा तथोक्तैव भवति; यामुनगुरुप्रभृत्यनुसंहितदोषजातं हि निहीनतमत्वेन सर्वलोकविदितेष्वपि मद्व्यतिरिक्तेष्वात्ममु केषु चित् सङ्कुचितमेव वर्तेत इति तेषु प्रसरन्ती परमविपुला त्वत्करुणा "गुणलवसहवासात् त्वत्क्षमा सङ्कुचन्ती" इति न्यायेन स्वयमपि सङ्कुचिता स्यात्, मयि आत्तदोषजातमसङ्कुचितमस्तीति त्वत्कृपाया अहमेव विषय इति भावः; त्वत्कृपाया अपेक्षितं असङ्कुचितदोषत्वं मय्यस्त्येवेति त्वत्कृपाया अहं विषय एवेति चाऽर्थः । अत्र त्वेवकारोऽसङ्कुचितमेवेति स्वस्थान एव तिष्ठति, करुणैवेत्येवकारश्च योजनाद्वयेऽपि भिन्नक्रमस्सन् मद्गतिरेवेति योजनीयः । यद्वा शास्त्रोक्ताधिकारवतां हि शास्त्रीयोपायो गतिः, ममत्वात्तदोषभरितस्य त्वत्कृपैव गतिरिति सोऽपि स्वस्थान एवानेतव्यः । अत्रापि शुद्धात्मेति विशेषणं योग्यस्थलोत्कर्षकल्पकं स्वस्थाने योग्यताविरहं बोधयितुमिति द्रष्टव्यम् । उत्तमकूरनाथेत्यत्र च 'सन्महत्परमोत्तमोत्कर्षाः पूज्यमानैः' इति सूत्रेण समासः ॥ १९ ॥

इत्थं यतिराजकृपायास्स्वविषयत्वं समर्थितं, अथ स्वविषयया तया स्वस्य समीहितं निर्दिशति—शब्दादीति ॥ हे यतीन्द्र,

श्रुत्यग्रवेद्यनिजदिव्यगुणस्वरूपः प्रत्यक्षतामुपगतस्त्विह रङ्गराजः । वश्यस्सदा भवति ते यतिराज तस्माच्छक्तस्स्वकीयजनपापविमोचने त्वम् ॥ ॥ १७ ॥

---

इह शरीरस्थितिदशायामेव अस्मदीया मदीया, अस्मदोर्द्वयोश्चेत्येकत्वे बहुवचनं ; यद्वा नित्यं गुरुं परिभवामीत्यत्राभिप्रेतैरनधिकारित्वेन स्वाभिप्रेतैः स्वोपदेशपात्रैस्सह स्वात्मनोऽस्मत्पदेन निर्देशः । शब्दादिभोगविषया रुचिः शब्दस्पर्शादिजन्यसुखानुभवेच्छा, भवद्दयया दुर्गत्यतिशयैकालम्बनया त्वत्कृपया, नष्टा भवतु यत्र क्वाप्यदृष्टा भवतु, णश अदर्शने । किञ्च यो भाग्याधिकः कर्ता, त्वद्दासस्य तव क्रयविक्रयार्हस्य, दासगणनाया दाससंख्यानस्य 'त्वद्दासावधिकदासतद्दासावधिकदाससङ्ख्यानस्य चरमावधौ स्वपूर्वकत्वे सति स्वोत्तरशून्यरूपमुख्यावधौ, न तु सैवासिकावधावित्यर्थः भवतीति शेषः । अविरता नित्या, तद्दासतैकरसता तस्य त्वद्दासदासगणनाचरमावधिस्थितस्य दासतायां एकरसता रसान्तरासंस्पृष्टरसवत्ता, रसो रागो हर्षो वा; भवद्दयया ममास्तु एतावन्तं कालमप्राप्तशेषत्वकाष्ठानिष्ठस्य मम त्वत्कृपया उत्पद्यतां; स्वस्य चरमावधिस्थितं प्रति दासत्वे त्वदासानां तद्दासत्वमनुक्तसिद्धमित्यभिप्रायेणास्माकमित्यनुक्तिः ; शब्दादिभोगरुचिनाशस्तु नैव सिद्ध्यतीत्यभिप्रायेणास्मदीयेत्युक्तिरिति बोध्यम् ॥ १६ ॥

इत्थं कार्यकारणोपयुक्तां दयामुक्त्वाथ तदुपयुक्तां शक्तिमुत्पादयति— श्रुत्यग्रेति ॥ हे यतिराज, श्रुत्यग्रैर्वेदान्तैर्वेद्यानि श्रवणेन ज्ञेयानि निजानि स्वासाधारणानि दिव्यानि भोग्यानि गुणा ज्ञानशक्त्यादयस्स्वरूपं नियन्तृत्वं प्रणतपारतन्त्र्यं वा यस्य स तथोक्तः । इह तु प्रत्यक्षतामुपगतो रङ्गराज , परत्वादिप्रकारचतुष्टयानधिकृते भूमण्डले परत्वादिप्रकारचतुष्टयसम्भावितदेशकालकरणविप्रकर्षविरहरूपसौलभ्यमुक्तां सकल-

कालत्रयेऽपि करणत्रयनिर्मितातिपापक्रियस्य शरणं भगवत्क्षमैव । सा च त्वयैव कमलारमणेऽर्थिता यत्क्षेमस्स एव हि यतीन्द्र भवच्छ्रितानाम् ॥ ॥ १८ ॥

मनुजनयनविषयतां प्राप्तो रङ्गराजः कर्ता ; ते सदा वश्यो भवति-तव विधिप्रतिषेधनिघ्नो नित्यमेव सत्तालाभं मन्यते । यत एवं तस्मात्त्वं स्वाधीनरङ्गराजस्त्वं तत एव हेतोः स्वकीयानां त्वत्स्वामिकानां ये जनास्त्वत्स्वामिका इत्यर्थः, तेषां पापस्य स्वरूपोपायपुरुषार्थयाथात्म्यसिद्धिप्रतिबन्धकस्य विमोचने निश्शेषनाशने शक्तस्समर्थो भवसीति च शेषः । अनेन—न च पुरुषकारभावकाष्ठारूपमेव पञ्चमोपायस्योपायत्वमिति निष्कर्षोऽनुसंहितो भवति । श्रुत्यग्रवेद्यप्रत्यक्षतामित्यत्र च "श्रुत्यन्तेषु श्रुतं भाष्ये मतं ध्यातं हृदम्बुजे । लक्ष्मीपतिं प्रपद्येऽहं दृष्टं श्रीरङ्गधामनि" इत्येतदनुसन्धेयम् । अनिष्टनिवृत्ताविष्टं स्वत एव सेत्स्यतीत्यभिप्रायेण च पापविमोचन इत्येतावदुक्तं; दिव्यगुणस्वरूप इत्यत्र च 'दिव्यो ह्यमूर्तः पुरुषः' इत्यादिश्रुतिः स्फोरिता; त्वद्दासदासेति पूर्वानुसारात् स्वकीयानां जना इत्यर्थ उक्त इति ध्येयम् ॥१७॥

नापूर्वं त्वया रङ्गराजो मदर्थमपेक्षणीयस्तव त्वदभिमानविषयाणाञ्च त्वया विरोधिनिवर्तनप्रार्थनाया रङ्गराजेन तत्करणसङ्कल्पस्य च पूर्वमेव कृतत्वात्, किन्तु मयि मदीय इत्यभिमान एव त्वयाऽपेक्षणीय इत्यभिप्रायेणाह—कालेति ॥ हे यतीन्द्र, कालत्रयेऽपि भूतभविष्यद्वर्तमानकालेषु सर्वदाऽपि करणत्रयेण मनोवाक्कायैः, निर्मिताः अनुष्ठिताः, अतिपापक्रियाः सर्वंसहेन स्वेनापि दुस्सहदुरितकर्माणि येन स तथोक्तः; तस्य शरणं अनिष्टनिवृत्त्युपायः, भगवतः हेयप्रत्यनीकस्य कल्याणगुणाकरस्य क्षमैव शिक्षणक्रमेषु दण्डानुपधानसङ्कल्परूपमागस्सहत्वमेव, भवतीति च शेषः । एवकारेण शरणान्तरं नास्तीत्युच्यते, सा च भगवत्क्षमा च, त्वया

परमकारुणिकेन भगवन्तं प्रति विधायकेन च त्वया, एवकारेण नान्येषामेवमर्थनं घटत इत्युच्यते, कमलारमणे—कारुण्यरूपयेत्युक्त-दिशा दयाक्षान्त्याद्युद्भाविकायाः 'न जीवेयं क्षणमपि' इत्युक्ति-विषयभूतायाः श्रियो रमणे, तदुद्भावितगुणवत्तया निरतिशयप्रियङ्करे भगवति अर्थिता प्रार्थिता मनोवाक्कायैरित्यादिना, कृतान् क्रिय-माणान् करिष्यमाणांश्च सर्वानित्यादिना, अद्यापि वर्तमानं वर्तिष्य-माणञ्चेत्यादिना च प्रार्थिता इति यत् स एव, विधेयानुसारात्पुंस्त्वं, भवच्छ्रितानां भवदभिमानविषयाणां क्षेमः नित्यसिद्धसञ्जीवनोपायः, क्षेममस्त्रियामित्युक्तेः पुंलिङ्गत्वञ्च, भवतीति शेषः । एवकारेण त्वद-भ्यर्थनमेव क्षामणं न त्वन्यदित्युच्यते, 'वश्यस्सदा भवति ते' इति पूर्वमुक्तम्, अत्र त्वर्थितेत्युच्यते । अनेन आज्ञाप्रतीक्षकं प्रत्यभ्यर्थ-नमव्यभिचरितकार्यकरमिति लब्धं, कर्मण एव अधिकरणत्वविवक्षया कमलारमण इति सप्तमी, अधिकरणस्यैवाधिकरणत्वरूपविशेषविवक्षया अकथितमित्यनेन कर्मत्वाप्राप्तेः द्वितीयाविरहादधिकरण एव सप्तमी वा, विवक्षातः कारकविभक्तय इति शाब्दिकोक्तेः । अत्र च—एक-तस्साधनान्तरविधायकशास्त्रप्रपञ्चः, एकतस्तत्त्यागपूर्वकसिद्धसाधन-स्वीकारसाधनं, एकतस्तु सिद्धसाधनस्वीकारविधानं, एकतश्च रामानु-जाभिमानोपायत्वव्यवस्थापनमिति सिद्धसाध्यसाधनविधायकबहुशास्त्र-विरोधसम्भावनया, तेषां अन्यार्थत्वव्यवस्थापनपूर्वकमस्यैवार्थस्योपादे-यत्वनिर्णयप्रयोजनको महाविश्वासोऽस्मिन्नर्थे प्रायेण दुर्लभ इति—वदन्ति । अत एवायमर्थः परमास्तिकैकग्राह्य इति नात्र विस्तरः क्रियते, हि यस्मादेवं तस्माद्भवदयया शब्दादिभोगरतिरस्मदीया नष्टा भवतीति पूर्वेणान्वयः ॥ ॥१८॥

श्रीमन्यतीन्द्र तव दिव्यपदाब्जसेवां श्रीशैलनाथकरुणापरिणामदत्ताम् । तामन्वहं मम विवर्धय नाथ तस्याः कामं विरुद्धमखिलं च निवर्तय त्वम् ॥ ॥१९॥

---

नित्यं यतीन्द्रेत्याभ्यामुपक्रान्तं स्वाभिमतार्थमुपसंहरति—श्रीमन्निति॥ श्रीमन् अवोच्यो यत्पदसरसिजेत्याद्युक्तरीत्या स्वपूर्वापरसर्वपूर्वाचार्योत्तारकत्वलक्षणानितरसाधारणनित्यसम्पन्निधे, मे मम, श्रीशैलनाथस्य मदाचार्यस्य, करुणापरिणामेन ईदृशमहाफलवितरणौपाधिककृपापरिपाकेन, दत्तां प्रसादितां; एतेन यतिराजस्यैव प्राप्यत्वं प्रापकत्वञ्च, स्वाचार्यस्य तु तत्सम्बन्धसम्पादकत्वमित्युक्तं भवति । उक्तञ्च वादिकेसरिभिः—अस्मद्गुरुदयायाः यतीन्द्राङ्घ्रीक्रियान्वय इति। तां पूर्वमेव मयि विद्यमानां विलक्षणामिति वाऽर्थः । तव चरमशेषिणस्ते दिव्ययोस्सूरिसेव्ययोः पदाब्जयोः पावनत्वभोग्यत्वाभ्यां पद्मतुल्ययोश्श्रीपादयोः, सेवां परिचर्यां; दिव्यपदाब्जेत्यादिना सेवाश्रवृत्तिरारुयातेत्यादिकमप्रासङ्गिकसेवानिषेधपरमित्युक्तं भवति। अन्वहं-अत्र परत्र चापि नित्यं विवर्धय, त्वद्दासदासपरिचर्यापर्यवसानरूपसाध्यविवृद्धिमतीं कुरु; तस्याः विवृद्धिमत्यास्त्वत्पादपरिचर्यायाः विरुद्धं प्रतिबन्धकं अखिलमशेषं ऐश्वर्यकैवल्यभगवल्लाभरूपं तस्यामेव स्वरसान्वयरूपं तदन्तरायसौन्दर्यानुभवरूपं अविद्याकर्मवासनारुचिप्रकृतिसम्बन्धरूपञ्च सकलमपि तत्प्रतिबन्धकं, त्वं चरमशेषीभूतश्चरमशरण्यभूतश्च त्वं, काममधिकं निवर्तय नाशय; यद्वा—तस्याः विरुद्धं कामं स्वरसमन्यच्चाखिलं निवर्तयेत्यर्थः । परिचर्यागतस्वरसस्यात्यन्तत्याज्यत्वविवक्षया प्राथम्यनिर्देशः । अत्र पादानुचिन्तनपर इति परमोपक्रमोक्तस्य विवर्धयेति परमोपसंहारः, नित्यं यतीन्द्र तवेत्यनन्तरोपक्रान्तस्य च दिव्यपदाब्जसेवामिति तत्पूर्वोपसंहारः, वृत्त्यन्त-

विज्ञापनं यदिदमद्य तु मामकीनमङ्गीकुरुष्व यतिराज दयाम्बुराशे। अज्ञोऽयमात्मगुणलेशविवर्जितश्च तस्मादनन्यशरणो भवतीति मत्वा ॥२०॥

इति यतिराजविंशतिस्समाप्ता ॥

---

रेऽस्तु विमुखमित्यादेश्च कामं विरुद्धमखिलं च निवर्तयत्वामित्युपसंहारश्च कृत इति ध्येयम् ॥१९॥

एवं उपक्रमोपसंहारमध्यैरुपपादितमर्थं हेतुना द्रढयति—विज्ञापनमिति॥ दयायाः स्वार्थानपेक्षपरदुःखासहिष्णुतारूपाया अम्बुराशे अक्षय्यनिधिभूत, एतेन कृपाया निर्व्याजसिद्धत्वं लभ्यते। अत्र-दयैकसिन्धो, रामानुजार्यकरुणैव तु, यतीन्द्रकरुणैव तु, भवद्दयया, करुणापरिणाम, दयाम्बुराशे-इति दयाया अभ्यासाद्भगवतो रामानुजस्य कृपामात्रप्रसन्नाचार्यत्वमित्युक्तं भवति; अयमर्थश्चरमोपायनिर्णयेऽनुसन्धेयः। यतिराज, मामकीनं मदीयं, यद्विज्ञापनं-वाचायतीन्द्रमनसेत्यारभ्य विरुद्धमखिलश्चनिवर्तयत्वमित्यन्तं विज्ञापनं, अत्र भवतीति शेषः। अत्र च वर्तमानसामीप्ये वर्तमानवदित्यव्यवहितभूते लट्, इदं यच्छब्दप्रतिनिर्देश इदंशब्दो द्वितीयान्तः, अस्य चाङ्गीकुरुष्वेत्यनेनान्वयः; यद्वा यदिदं मामकीनं विज्ञापनमिति योजनीयं तदिति चाध्याहर्तव्यं, यत्तदोर्नित्यसम्बन्धात्, तद्विज्ञापनं कर्म। अज्ञः समीचीनज्ञानशून्यो जन्तुः, अयं विशेषनिर्देशानर्हतया बुद्धिस्थत्वमात्रेण निर्देशार्होऽहं, किंचात्मगुणलेशेन विवर्जितो नासावस्मद्दास्यार्ह इति दूरादेव त्यक्तो जन्तुरयं बुद्धिस्थोऽहं, यत एवं तस्मादनन्यशरणो भवति स्वगतपरगतस्वीकारशून्यनिष्क्रियननैकालम्बनभूतमद्यानिरिक्तोपायशून्यो भवति,

इति मत्वा, अज्ञोऽयमित्यादिना सन्दर्भेणोत्पादितज्ञानसमानाकाराभिसन्धिमान्भूत्वा, अङ्गीकुरुष्व-तथा सम्पादनसङ्कल्परूपस्वीकारविषयं कुरु, आत्मनेपदेन क्रियाफलं कर्तृगामीत्युच्यते, तेन फलस्य केवलपरार्थत्वसिद्धिः, अज्ञ इत्युद्दिश्य अयमिति विधानादयमेवाज्ञ इति लभ्यते, तेन आकिञ्चन्यरूपाधिकारपूर्तिर्लभ्यते, अयमित्यस्य अहमिति व्याख्याने तु फलितार्थकथनं तेन भवतीत्यस्य नानुपपत्तिः । अत्रापि प्रपन्नसावित्रीशैली प्रत्यभिज्ञाप्यते, तत्र ह्युपात्तगाथायां यतिराजसम्बोधनेन विज्ञापनं प्रतिज्ञाय तदीयदास्यं प्रार्थितं, अत्राप्युपान्त्यश्लोके विपर्धयेति तदीयदास्यमर्थयित्वा तद्विज्ञापनं उपरितनश्लोके निबद्धं, तत्र श्रीशब्दार्थेनोपक्रमोपसंहारौ कृतौ, अत्रापि श्रीमाधवेति श्रीमन्नित्युपक्रमोपसंहारौ कृतौ, अनेन तच्छैलीगन्धिन्यस्मिन् प्रबन्धे तद्वदेवादरो यतिराजस्य भवेदित्यभिप्रायोऽवगम्यत इति रमणीयम् ॥२०॥

इति दिनचर्याव्याख्यायां सदाचारदीपिकासमाख्यायां

यतिराजविंशतिविभागः ॥



श्रीः

# उत्तरदिनचर्या

इति यतिकुलधुर्यमेधमानैः श्रुतिमधुरैरुदितैः प्रहर्षयन्तम् । वरवरमुनिमेव चिन्तयन्ती मतिरियमेति निरत्ययं प्रसादम् ॥ १ ॥

## उत्तरदिनचर्याव्याख्या

एवं यतिराजविंशतिरनूदिता। अथ तां इतिशब्देन परामृश्य तया यतिराजं प्रहर्षयतो वरवरमुनेश्चिन्तनेन सञ्जातं स्वमतिप्रसादविशेषमनुसन्धत्ते—इतीति ॥ इति उक्तप्रकारेण, एधमानैः—भूयिष्ठां ते नम उक्तिमिति न्यायेन एकैकश एव श्लोकसहस्रायमाणैः, भूयिष्ठामिति भूयिष्ठत्वं हि नन्तव्यहृदयाभिप्रायेणेत्युक्तं पूर्वैः, तद्वदत्र यतिराजहृदयाभिप्रायेण विंशतेरेधमानत्वं विवक्षितम् । अर्थतो गम्भीरत्वादप्येधमानत्वं युक्तं; श्रुतिमधुरैः श्रोत्रसुखकरैः, उदितैर्वचनैः यतिकुलधुर्यं यतिकुलश्रेष्ठं यतिकुलस्य रक्षाभरनिर्वोढारं वा, प्रहर्षयन्तं प्रकर्षेण प्रीणयन्तं, प्रशब्देन प्रीतेरनन्यार्थत्वमुच्यते, स्वयंप्रयोजनस्य प्रकृष्टत्वं, आत्मनेपदनिर्देशविरहेण प्रहर्षस्य केवलपरार्थत्वं व्यज्यते, प्रहर्षयन्तमिति च प्रहर्षयिष्यामीति परमाचार्यसूक्तिं स्मारयति । वरवरमुनिमेव चिन्तयन्ती एवकारेण च प्रहर्षणकर्मणो यतिराजस्य स्वातन्त्र्यतश्चिन्तनं व्युदस्यते । इयं मतिः एतावन्तं कालमप्राप्तविषयसम्बन्धात् कलुषिता मम बुद्धिः कर्त्री, निरत्ययं नित्यं प्रसादं प्रसन्नतामेति प्राप्नोति; इण्गतौ, चिन्तयन्तीत्यत्र लक्षणहेत्वोरिति हेत्वर्थशत्रादेशः। चिन्तयन्ती मतिरिति स्वनुभूयमानानुभववन्निर्देशः, वरवरमुनिमेव चिन्तयन्तीत्यनेन प्रसिद्धचिन्तयन्तीदीर्घचिन्तयन्तीभ्यां विलक्षणेयं काचिच्चिन्तयन्तीति स्फोर्यते, प्रहर्षयन्तं चिन्तयन्ती प्रसादमेतीत्यत्र च

अथ गोष्ठीं गरिष्ठानामधिष्ठाय सुमेधसाम् । वाक्यालङ्कृतिवाक्यानि व्याख्यातारं नमामि तम् ॥ ॥२॥

तापार्तां जलशायिनामिति न्यायोऽनुसन्धेयः। श्रुतिमधुरैरुदितैरित्यत्र रुदितैरिति प्रतीत्या विरुद्धमतिकृद्दोष इति केचिदाहुः; तन्न, 'श्रुतिमधुरैः' इति विसर्गस्मरणस्यैव ज्ञाढित्यात्, यद्वा नात्र विरुद्धमतिकृद्दोषः, हा हन्त हन्तेत्यादिना दुःखातिशयस्य प्रस्तुतत्वात्परमार्तिप्रयुक्तरुदितस्य स्वरूपौज्वल्यहेतुत्वात्, 'किमर्थं तव नेत्राभ्यां वारि स्रवति शोकजम्' इत्यादिन्यायेन शोपिप्रियत्वाच, 'न चैव देवी विरराम कूजितात्' इति न्यायेन श्रुतिमधुरत्वस्याप्युपपत्तेश्च, 'सुखं वा दुःखं वा निबिडयतु यूनोस्सहृदये त्वमन्दानन्दात्मा परिणमति पूर्णो रसभरः' इति न्यायेन चिन्तयन्ती निरत्ययं प्रसादमेतीत्यस्याप्युपपत्तेश्च, 'क्रुध्येद्विषीदेद्धृष्येच्च' इति भरद्वाजोक्तरीत्या विषादतत्कार्ययोरदोषत्वाच्च ॥ ॥१॥

इत्थं ग्रन्थनिर्माणकर्मणेत्युक्तस्वाध्यायविशेषमनुसन्धाय 'व्याख्यानैर्लक्षणैर्वाऽपि' 'व्याचक्षीत निबध्नीयात्' इत्यादिविशेषशास्त्रसिद्धव्याख्यानरूपस्वाध्यायविशेषमनुसन्धत्ते—अथेति ॥ अथ ग्रन्थनिर्माणानन्तरं यतिराजविंशत्या यतिराजप्रीणनानन्तरमित्यर्थः, गरिष्ठानां गुरुतमानां प्रत्येकं व्यासपदनिर्व्यूढानां सुमेधसां समीचीनमेधायुक्तानां, 'मेधाऽऽशुग्रहणे' इतिधातुपाठादाशुग्रहणं मेधा, धीर्धारणावती मेधेत्युक्तेर्धारणावती धीर्वा मेधा तन्त्रेणोभयी वा मेधाऽत्र विवक्षिता ; नित्यमसिच्प्रजामेधयोरित्यसिच्प्रत्ययः, गोष्ठीं परिषदं अधिष्ठाय अध्यास्य उपह्वरादिति शेषः । वाक्यालङ्कृतेः वचनभूषणस्य, रत्नप्रचुरं भूषणं रत्नभूषणमितिवत् वचनप्रचुरत्वादनुसन्धातॄणामौज्वल्यकरत्वाच्च वचनभूषणत्वं, शब्दप्राचुर्यं ह्यर्थप्राचुर्यगमकं, प्राचुर्यस्य स्वाश्रयं प्रति विशेष्यत्वे स्वाश्रयसमानाधिकरणतद्विजातीयाल्पत्वनियम-

तियोगित्वभाननियमादित्यतो वचनपदं पूर्वाचार्यवचनपरं ; तथा च तद्विजातीयस्य स्ववचनस्याल्पत्वमाप्त्यतिशयसम्पादकमित्यभिप्रायेण पूर्वाचार्यवचनप्रचुरत्वं पूर्वैर्व्याख्यातं ; अयं न्यायो वाक्यालङ्कृतिपदेऽप्यनुसन्धेयः; वाक्यानि-कृतिगम्भीरसन्दर्भे श्रीमद्वचनभूषणमिति प्रसिद्धानि कारकक्रियारूपाणि, 'विविच्यमानं नाकाङ्क्षं परानाकाङ्क्षशब्दकम् । कर्मप्रधानं गुणवदेकार्थं वाक्यमुच्यते' इत्युक्तलक्षणलक्षितानि ; व्याख्यातारं पदच्छेदादिभिर्विवरणशीलं, ताच्छीलिकस्तृन्प्रत्ययः, अतो न षष्ठी, न लोकेति निषेधात् । अनेन श्रीवचनभूषणस्य 'परिचितमिवाथापि गहनं' इत्युक्तस्वभावविशेषो व्यञ्जितः। अत एव कालक्षेपप्रधानेन सिध्यतीत्युक्तं भवति । तं वरवरमुनिं नमामि । अथवा गरिष्ठानां गोष्ठीमधिष्ठाय वाक्यालङ्कृतिवाक्यानि सुमेधसां व्याख्यातारमित्यन्वयः । सुमेधसामित्यनेन च उपदेशपात्रतोपयुक्तमहाबुद्धित्वं विवक्षितं ; यथोक्तं शाण्डिल्येन 'प्रियवाक्यं महाबुद्धिम्' इति ; अनेन 'शिष्याणां शिक्षया वाऽपि स्वाध्यायार्थोऽयमुच्यते' इति स्वाध्यायविशेषोऽनुष्ठित इत्युक्तं भवति । अत्र च "साङ्गारिलद्रमिडसंस्कृतरूपवेदसारार्थसङ्ग्रहमहारसवाक्यजातम्" इति प्रसिद्धस्य श्रीवचनभूषणस्य व्याख्यानादिना सर्वोऽपि स्वाध्यायोऽनुष्ठितो भवति। यथोक्तं भरद्वाजेन—"पुराणान्यवगाहेत सेतिहासानि यत्र च । केशवस्य जगत्सर्गस्थितिभङ्गादि कीर्त्यते। स्तोत्राणि कल्पान् नामानि कथाश्च विविधा हरेः । सद्भिः प्रणिहितांश्चान्यान् प्रबन्धान् परिशीलयेत् ॥ मूलस्कन्धमयो वेदः पद्यरात्रं यत्परम् । अन्यच्च तत्परं प्रायं शास्त्रं नान्यादृशं पुनः"—इति । 'दिवसस्याष्टभागो दशाद्भिरुदाहृतः' इत्युक्तप्रक्रियया तु 'वेदाभ्यासाद्वितीये तु' इत्युक्तवेदाभ्यासः तत्त्वंदिव्यप्रबन्धानामित्यादिनोक्तः । 'इतिहासपुराणादिपाठस्सप्तमषष्ठयोः' 'इतिहासपुराणाभ्यां षष्ठं सप्तममभ्यसेत्'

सायन्तनं ततः कृत्वा सम्यगाराधनं हरेः ।
स्वैराऽऽलापैः शुभैश्श्रोतॄन्नन्दयन्तं नमामि तम् ॥३॥

---

इत्युक्तं इतिहासपुराणप्रवचनन्तु श्रीवचनभूषणव्याख्यानेनानुष्ठितमित्युक्तं भवति । वेदार्थनिर्णयस्स्मृतीतिहासपुराणैरिति खलु तत्रोपक्रमः, व्याख्यानप्रकारश्च काव्ये विशदमुक्तः—"स तत्र निश्चलं चेतश्चिरेण विनिवर्तयन् । रहस्यग्रन्थतत्त्वेषु रमयामास तत्प्रियान् । वान्यसङ्गतिवाक्यार्थतात्पर्याणि यथाश्रुतम् । व्याकुर्वन्नेष पूर्वेषां वर्तमानं पदेपदे । स्वमनीषिकया नैव कल्पयन् किञ्चदप्ययम् । गुप्तान् पूर्वैर्गुरुत्वेन गूढानर्थानदीदृशत् । श्रुतिस्मृतीतिहासेन श्रुत्यन्तैः पञ्चरात्रतः । देशिकानां निबन्धॄणां दर्शयन्नेककण्ठताम् । वाक्यालङ्कारवाक्यानि व्याचक्षाणो विचक्षणान् । सुधियस्स्वादयामास स्वस्वरूपं सुदुर्ग्रहम्"—इति ॥ ॥२॥

ततः बुद्धिस्थात्सान्ध्यविधिसाधनादनन्तरं ; उक्तञ्च काव्ये—'ततस्सान्ध्यं विधिं कृत्वा स्तुत्वा च मधुसूदनम्"—इति । तत इत्यस्य पूर्वपरामर्शित्वेऽपि गुणोपसंहारन्यायेन काव्योक्तसान्ध्यविधिविधानमानेतव्यम् । सायन्तनं सायंसन्ध्याभवं, सायंचिरमित्यादिना ट्युप्रत्ययतुडागमावनादेशश्च ; हरेः विरोधिनिरसनशीलस्य रङ्गनिधेः, अथवा 'ब्रह्माण शितिकण्ठञ्च यमं वरुणमेव च । प्रसह्य हरते यस्मात्तस्माद्धरिरितीर्यते' इत्युक्तरीत्या सर्वदेवतानियमनशीलस्य । अत्र रङ्गनिधिमिति सौलभ्यमुक्तं , श्रीनिधिमिति सौन्दर्यमुक्तं, हरिमिति परत्वमुक्तं ; तथा च परत्वसौन्दर्यसौलभ्यानां मेलनमाश्रयणीयत्वप्रयोजकमित्युक्तं भवति । आराधनं अर्चनं, सम्यक्कृत्वा परभक्त्या कृत्वा, शुभैर्मङ्गलकरैः स्वैरालापैः स्वैरमेव कृतैराभाषणैः श्रोतॄन्पूर्वोक्तान्सुमेधसः नन्दयन्तं सुखयन्तं समृद्धान्कुर्वन्तं वा, तं वरवरमुनिं, नमामि ; टुनदि समृद्धाविति धातुपाठः । स्वैरालापप्रकारश्च शतकेषु संहितः—"आम्ना-

येषु स्तुतिभिरमितैस्सेतिहासैः पुराणैर्दृश्यं यत्नैर्यदिह विदुषां देशिकानां प्रसादात्। स्वैरालापैस्सुलभयसि तत्पञ्चमोपायतत्त्वं दर्शंदर्शं वरघरमुने दैन्यमस्मद्विधानाम्" इति शोचयित्वा, आराध्य आराधनं कृत्वेति कालत्रयार्चनमुक्तं, तदिदं शाण्डिल्येनोक्तं—'आमुहूर्तात्तु वै ब्राह्मादन्यूनं प्रहरात्सुधीः। स्नानार्चनजपस्तोत्रपाठैः कालं विनोदयेत्। योगानुपार्ज्य यागार्थ'—इत्यारम्य, 'प्रसन्नो यागमारभेत्। अभिगम्य यथापूर्वमर्चयित्वा यथाविधि'—इति, त्रिकालद्रव्ययोगेनेति च। तथा पराशरेणाप्युक्तं–'त्रिकालमर्चयेद्देवं प्रतिमासु विशेषतः'—इति, 'एवं त्रिकालमर्चायां पूजयेद्विधिवद्धरम्'—इति च, कालत्रयार्चनान्तेष्विति च; यतिधर्मसमुच्चये च—'प्रातस्स्नानं जपो मौनं नित्यमेकान्तशीलता। नमस्कारोपवासौ च भक्तिर्विष्णौ तथा गुरौ। आस्तिक्यं ब्रह्मसंस्पर्शः प्राणायामरतिस्तथा। त्रैकाल्यमर्चनं विष्णोः परमं मुक्तिसाधनम्'—इति; अत्रिश्च—"त्रैकाल्यमर्चनं विष्णोः'—इति। इदमाराधनं पाञ्चकाल्यस्थानाभिषिक्तं; तदुक्तं भरद्वाजपरिशिष्टे—'प्राप्त्याभिगमनं द्रव्योपादानं नमसाऽर्चनम्। स्वाध्यायः कीर्तनाद्योगस्स्वार्पणादपि केवलम्। एवं विद्वानेकदाऽपि कुर्वन् स्यात्पाञ्चकालिकः। कृतं भवति वा सर्वमिज्ययैव हि केवलम्'—इति। एवं योगोऽपि त्रैकालिकः; तदुक्तं शाण्डिल्येन—"वक्ष्यामि योगादूर्ध्वं यत्कर्तव्यं स्नानपूर्वकम्। उच्चैस्स्वरेण योगान्ते स्तुत्वा स्तोत्रैरनन्यधीः'—इत्यादि। तथा 'अष्टाङ्गयोगप्रीतिश्च कृत्वा ध्यानपरो वशी' इति; "यामिन्यां योगकाले तु यत्कार्यं योगिभिर्नरैः। वक्ष्यामि वस्समासेन शृणुध्वं मुनिपुङ्गवाः"—इत्युपक्रम्य 'कुर्याद्योगमतन्द्रितः'—इत्यादि च। यतिधर्मसमुच्चये च दक्षः—'शून्ये गृहे नवगृहे गुहायां गिरिगह्वरे। यत्र वा रमते बुद्धिस्तत्रासीत प्रसन्नधीः। योगे शास्त्रोक्त-

ततः कनकपर्यङ्के तरुणद्युमणिद्युतौ ।
विशालविमल-श्लक्ष्णतुङ्गतूलासनोज्ज्वले ॥ ४ ॥
समग्रसौरभोद्गारनिरन्तरदिगन्तरे ।
सोपधाने सुखासीनं सुकुमारे वरासने ॥ ५ ॥

मार्गेण कृतासनपरिग्रहः योगं युञ्जीत सततं सन्ध्यास्वपि विशेषतः'-इति। अयं च योगः पाञ्चकाल्यस्थानाभिषिक्तः, तदुक्तं भरद्वाजपरिशिष्ट एव 'सर्वं योगेन वा कृतम्' इति । तदिदं कालत्रयेऽपि योगानुष्ठानं 'प्रकारान्प्रणिधाय च' 'ततश्चेतस्समाधाय' 'कृत्वा चेतश्शुभाश्रये' इत्युक्तं ; किञ्च 'श्रीमन्यतीन्द्र तव दिव्यपदाब्जसेवाम्' इत्युक्तस्वाचार्यार्चनमपि पाञ्चकाल्यकार्यकरम् । तदुक्तं भरद्वाजपरिशिष्टे—'पूजनेन गुरोर्वाऽपि सतां वा परिषेवणात्' इति । एवं स्वाध्यायोऽपि त्रैकालिकः ; तदुक्तं शाण्डिल्येन—'वासुदेवादिमूर्तीनां नाम्नां सङ्कीर्तनं चरेत्' इति । प्रातः कालिकं प्रकृत्य—"अतन्द्रितस्य स्वाध्याये योगयुक्तात्मनस्सदा । सङ्गत्या स्विन्नदेहस्य नावश्यं नामकीर्तनम्" इति, 'वेदाभ्यासो द्वितीये तु' इति, 'इतिहासपुराणाभ्यां षष्ठं सप्तममभ्यसेत्' इति च—स्थलान्तरेषूक्तम्। सोऽयं त्रैकालिकस्वाध्यायोऽत्र--'ध्यात्वा रहस्यत्रितयं' 'तत्त्वं दिव्यप्रबन्धानां' 'वाक्यालङ्कृतिवाक्यानि व्याख्यातारम्'--इत्युक्तः। अयमपि पाञ्चकाल्यकार्यकरः ; तदुक्तं भरद्वाजपरिशिष्टे--'स्वाध्यायेनापि विष्णुपरस्सर्वं योगेन वा कृतम्'—इति ॥ ३ ॥

तत इति॥ ततः पञ्चमोपायतत्त्वाविष्कारपरस्वैरालापैः श्रोतृमनोऽञ्जीवनानन्तरं, तरुणद्युमणिद्युतौ बालार्कप्रभे, विशालेन विस्तारवता विमलेन निर्दोषेण श्लक्ष्णेन मसृणेन तुङ्गेन उच्छ्रितेन तूलासनेन उज्ज्वले प्रकाशमाने समग्रेण सम्पूर्णेन सौरभस्य भगवत्प्रसादमाल्यादिसौगन्ध्यस्य उद्गारेण अनिशयितप्रवाहेन निरन्तराणि नीरन्ध्राणि दिगन्तराणि दिङ्-

ध्यानि यस्य तथोक्ते, सोपधाने पश्चात्कायवहनक्लेशपरिहारायोपाश्रयभूतोपधानसहिते, कनकपर्यङ्के—हेममञ्चे, मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः—इति हि कोशः । सुकुमारे अतिमृदुले, वरासने चेलाजिनकुशोत्तर इत्युक्तयोगयोग्यासने, सुखेनासीनं; अस्य च चिन्तयामि तमित्युत्तरत्रान्वयः। अत्र सुखासीनमित्यनेन 'आसीनस्सम्भवात्' इति सूत्रार्थोऽनुसंहितः । समग्रसौरभेत्यादिना च—'मनोऽनुकूले' 'ततो निवातके रम्ये यत्र वा रमते मन' इत्यादिस्मृतिवचनविषयकस्य 'यत्रैकाग्रता तत्राविशेषात्' इति सूत्रार्थोऽनुसंहितः। अत्र कनकपर्यङ्क इत्यस्य भृत्यैस्सज्जीकृत इत्यादिः; काव्ये समानप्रकरणे "ततस्सज्जीकृतं भृत्यैश्शयनीयं विभूषयन्" इत्युक्तेः, "भृत्यैस्स्निग्धैः प्रियहितपरैराश्रिते भद्रपीठे तुङ्गं तूलासनवरमलङ्कुर्वतस्सोपधानम्" इति शतकोक्तेश्च । एवञ्च भक्ताभ्यर्थनया पर्यङ्काभ्यनुज्ञा न दुष्यति; तथा च भागवते पारमहंस्यधर्ममधिकृत्य प्रह्लादं प्रत्यजगरेणोक्तं—'क्वचिच्छये धरोपस्थे तृणपर्णाश्मवेश्मसु । क्वचित्प्रासादपर्यङ्के कशिपौ वा परेच्छया'—इति। एतेन—'राज्यध्वानञ्च यानञ्च स्त्रीकथा लौल्यमेव च। मञ्चकं शुक्लवस्त्रञ्च यतीनां पतितानि षट्'—इत्यादिकं लौल्यसमभिव्याहारात्स्वयं रागतो गृहीतमञ्चनिषेधपरमिति स्फोरितम्। एतेन काव्याद्युक्तं यानाभ्यनुज्ञानादिकमपि व्याख्यातं; 'रथेभाश्वैश्वरैरेकाऽपि' इति भागवतोक्तेः। विशिष्यैव च पराशरसंहितावचनान्यत्रानुसन्धेयानि। कनकपर्यङ्क इत्युक्तसौवर्णसम्बन्धोऽपि परप्रार्थनया, अतो न दुष्यति, यतो मेधातिथिस्सौवर्णपरिग्रहस्यैव दोषं मन्यते न तूपयोगस्य। तथा च तेनोक्तं—'सौवर्णराजतेष्वपि ताम्रकांस्येषु ताम्राब्जाश्ममयेषु च। भुञ्जन्भिक्षुर्नलिप्येत दूष्यते तु परिग्रहात्'—इति। इदञ्च

उन्मीलत्पद्मगर्भद्युतितलमुपरिक्षीरसङ्घातगौरं राकाचन्द्रप्रकाशप्रचुरनखमणिद्योतविद्योतमानम् । अङ्गुल्यग्रेषु किञ्चिन्नतमतिमृदुलं रम्यजामातृयोगी दिव्यं तत्पादयुग्मं दिशतु शिरसि मे देशिकेन्द्रो दयालुः ॥ ६ ॥

---

वचनं न्यायसाम्यादन्यस्यापि सौवर्णस्योपयोगमनुमन्यते । अत एव 'दूष्यते तु परिग्रहात्' इति वाक्यशेषस्वरसः ॥ ४–५॥

तन्नामगुणहर्षित इत्याद्युक्तभक्तजनप्रस्तुतां स्वाचार्यस्तुतिमनुभवति—उन्मीलदिति॥

दयालुः करुणाशीलः, देशिकेन्द्रः—देशिकानामाचार्याणाम् इन्द्रश्श्रेष्ठः, इदि परमैश्वर्ये, आचार्यतोपयुक्तधर्मपुष्कल इत्यर्थः,—अनेन च स्वानुवृत्तिप्रसन्नाचार्यात्कृपामात्रप्रसन्नाचार्यस्य अभ्यहितत्वं व्यञ्जितं, रम्यजामातृयोगी, उन्मीलतो विकसतः न तु विकसितस्येत्यर्थः, पद्मगर्भस्येव वातातपाद्यनुपहताभ्यन्तरप्रदेशस्येव द्युतिः कान्तिर्यस्य तत्तथोक्तं, तथाविधं तलं यस्य तत्तथोक्तं; पद्मद्युतित्वञ्च रक्तत्वं, यथोक्तं शतके पद्मपत्राभिताम्रमिति । पादतलस्य रक्तत्वं हि महापुरुषलक्षणं, तदुक्तं —'नेत्रान्तनखपाण्यङ्घ्रितलैस्ताम्रैस्त्रिभिर्भगी' इति; तथा—'मुखनेत्रास्यनिह्नोष्ठतालुस्तननलाः करौ । पादौ च दश पद्मानि पद्माकाराणि यस्य च' इत्येतदपि पद्मगर्भद्युतीत्यत्रानुसन्धेयम् । उपरि क्षीरसङ्घातगौरं—ऊर्ध्वभागे क्षीरराशिवद्धवलं, अनेन दिव्यमङ्गलविग्रहस्य पाण्डुरवर्णत्वं व्यञ्जितं; अत्र च हेतुश्शेषांशत्वं, यथा बलभद्रस्य; तदुक्तं काव्ये 'मङ्गलं पन्नगेन्द्राय मर्त्यरूपाय मङ्गलम्'–इति । अत्र क्षीरसङ्घातेति सङ्घातदृष्टान्तमहिम्ना पादयोर्महत्त्वं व्यज्यते; तदप्युक्तं ब्रह्मणा—'शिरोललाटश्रवणे ग्रीवावक्षश्च दृक् तथा। उदरं पाणिपादौ च पृष्ठं दश

त्वं मे बन्धुस्त्वमसि जनकस्त्वं सखा देशिकस्त्वं विद्यावृत्तं सुकृतमतुलं वित्तमप्युत्तमं त्वम् । आत्मा शेषी भवसि भगवन्नान्तरश्शासिता त्वं यद्वा सर्वं वरवरमुने यद्यदात्मानुरूपम्॥७॥

---

वृहन्ति च'—इति । राकाचन्द्रप्रकाशेन—पूर्णिमाचन्द्रसदृशशोभया, प्रचुराणां भूयिष्ठानां नखमणीनां रत्नवत्स्पृहणीयानां नखानां द्योतेन प्रकाशेन विद्योतमानं; क्षीरार्णवमिव अनेकचन्द्रैर्विशेषतो दीप्यमानम् । अत्र चन्द्रप्रकाशप्रचुरेति प्राचुर्यस्य स्वाश्रयं प्रति विशेषस्य सति सम्भवे प्रायशस्स्वाश्रयसमानाधिकरणस्वाश्रयविजातीयनिष्ठाल्पत्वप्रतियोगिकत्वभाननियमेन पद्मद्युतित्वमुपस्थितत्वाल्लभ्यते । चन्द्रवर्णानां पद्मद्युतित्वमप्रभागेष्वातिरक्ताग्रत्वं नखानां लभ्यते । अत्र च वचनमुन्मीलत्पद्मगर्भेत्यत्र लिखितं द्रष्टव्यम् । अङ्गुल्यग्रेषु किञ्चिन्नतं कुटिलाङ्गुलित्वमनेनोच्यते, तदुक्तं हि 'पादावरालाङ्गुली' इति । अतिमृदुलं—पूर्वोक्ताम्लानकुसुमादपि कोमलं, दिव्यमप्राकृतं तद्विलक्षणं पादयुगमं, मे शिरसि अत्यन्ततृपितस्य मम मूर्धनि, दिशतु ददातु, अवतंसीकरोत्वित्यर्थः । अत्र—'तत्पादौ गृह्य मूर्ध्नि स्वे निधाय विनयान्वितः' इत्युक्तस्य पादधारणस्याचार्यकर्तृकनिधानपूर्वकत्वमत्यन्तपारतन्त्र्यानुगुणं प्रार्थ्यते ॥६॥

त्वमिति ॥ वरवरमुने त्वं मे बन्धुरसि, बध्नातीति बन्धुः, अवर्जनीयबन्धवानसि, असीतिवर्तमानेन कादाचित्कबन्धुभ्यो व्यावृत्तिः, बन्धवो ह्युपायोपेयभूतास्तथाभूतस्त्वमसीत्युच्यते; त्वं जनकोऽसि, पिताऽसि, 'स हि विद्यातस्तं जनयति' इति ह्युक्तं; अत्राप्यसीत्यनेन हिरण्यादिर्व्युदस्यते । त्वं सखाऽसि—मित्रमसि, मित्रमापदि जानीयादिति ह्युक्तं; भगवदनुभवादिषु वृत्तकीर्तनसाहाय्यादिकमत्राभिप्रेतं, अत्राप्यसीत्यनेन

उपकारोपाधिकसखित्वविशेषो व्युदस्यते; देशिकोऽसि अज्ञातज्ञापकत्वेन तदा तदोपकरोपि, 'न गुरोरपरस्तात' इति ह्युक्तम्। त्वं विद्याऽसि पूर्वोक्तगुरूपदिष्टविद्याऽसि, मातेव रक्षतीत्याद्युक्तविद्याधर्मवानसि । त्वं वृत्तमसि पूर्वोक्तविद्याफलभूतसद्वृत्तवाञ्छितभूतोऽसि। अतुलं सुकृतमसि पूर्वापराणां सर्वेषां निदानभूतपुण्यमसि, अतुलमित्यनेन अचेतनभूतं क्षयिफलप्रदं फलप्रदानेन च क्षयिष्णु प्रसिद्धसुकृतं व्युदस्यते ।। त्वमुत्तमं वित्तमसि—अस्तित्वज्ञानमात्रेण प्राणधारकं स्ववतां सर्वोपसेव्यतापादकं धनमसि, उत्तमशब्देन 'अर्थानामार्जने दुःखं' इत्युक्तं प्रसिद्धधनं व्युदस्यते। त्वमात्मा भवसि, पूर्वोक्तस्य सर्वस्याप्युपादातृतया प्रधानभूत आत्मा भवसि, शेषी भवसि आत्मनोऽप्युपादातृतया प्रधानतमोऽसि,' भगवन् ज्ञानशक्त्यादिगुणाश्रय, आन्तरश्शासिता त्वं भवसि—अन्तरे भव आन्तरस्तथाविधो यश्शासिता नियन्ता सोऽसि; जनको देशिक इति बाह्यशासितृत्वमुक्तं, अत्र त्वान्तरं तदुच्यते । यद्वा —य आत्मानमन्तरो यमयतीत्युक्तो भगवानान्तरश्शासिता, तस्यापि त्वं शासितेत्यर्थः; अन्तरस्यायमान्तर इति विग्रहः, ज्ञानी त्वात्मेत्युक्तेः । यद्वा—किं बहुना, यद्यदात्मानुरूपं भवति विरोधिनिवर्तनं प्रथममध्यमचरमपर्वप्रभेदाभिलप्राप्त्यासिद्धचेत्यादिकं यद्यदात्मस्वरूपयाथात्म्योचितं भवति, तत्सर्वं भवसि; उत्तरयच्छब्दस्य तच्छब्दप्रयोगोऽनपेक्षितः । यद्वेति पूर्वोक्ताक्षेपे वर्तते; अत्र च—"आचार्यवद्दैवतवन्मातृवत्पितृवत्स्वयम्। सुहृद्वत्स्वामिवत्सन्तो द्रष्टव्या राजवत्तथा"—इत्यादिकं, 'अविमज्यात्मनाऽऽचार्यं वर्तेतास्मिन् यथाऽच्युते'—इत्यादिकं, 'ऐहिकामुष्मिकं सर्वम्'—इत्यादि कं च द्रष्टव्यम् ॥७॥

अग्रे पश्चादुपरि परितो भूतलं पार्श्वतो मे मौळौ वक्त्रे वपुषि सकले मानसाम्भोरुहे च ॥ दर्शंदर्शं वरवरमुने दिव्यमङ्घ्रिद्वयं ते नित्यं मज्जन्नमृतजलधौ निस्तरेयं भवाब्धिम् ॥ ८ ॥

---

अग्र इति ॥ वरवरमुने दिव्यं अद्भुतं ते तव अङ्घ्रिद्वयं—पादयुग्मं, कर्म अग्रे पुरतः पश्चात्पृष्ठतः भूतलं परितः भूतलस्य समन्तात्, अभितः परितइत्यादिना परितश्शब्दयोगे द्वितीया । मे पार्श्वतः पार्श्वयोः, सप्तम्यास्तसिः, मौळौ शिरसि, वक्त्रे मुखे, सकले वपुषि अवयवकार्त्स्न्यवाच्ययं सकलशब्दः, सर्वावयवावच्छिन्ने शरीरे इत्यर्थः । मानसाम्भोरुहे हृदयपुण्डरीके, चकारेण चक्षुरादीन्द्रियं समुच्चीयते; एतेषु स्थानेषु पश्यन् भावनाप्रकर्षवशाद्विशदस्मृतिविषयं कुर्वन्; एतच्च "पश्यामि तामित इतः पुरतश्च पश्चात्" इत्यादिना प्राकृतविषयेऽपि प्रसिद्धम् । अमृतजलधौ मृतसञ्जीवनामृतसागरे, मज्जन् अवगाहमानस्सन्, भवाब्धि निस्तरेयं अतिवर्तितुमाशासे, आशिषि लिङ्; चित्रमिदमेकस्मिन् जलधौ मज्जनेनान्यजलधिनिस्तरणमिति; इदन्तु दिव्याङ्घ्रिदर्शनमहिमेति भावः । समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनमित्युक्तलक्षणलक्षितं काव्यलिङ्गमलङ्कारः, सचामृतजलधाविति रूपकातिशयोक्त्या भवाब्धिमिति रूपकेण चानुप्राणित इत्यङ्गाङ्गिभावसङ्करः । अमृतजलधौ मज्जन्नित्यत्र च पादारविन्दयुगलं शिरसिकृतं ध्यात्वाऽमृतसागरान्तर्निमग्नसर्वावयवस्सुखमासीतेत्यादिकमनुसन्धेयम् । प्राकृतेऽपि हि विषये 'आनन्दसान्द्रमभृतप्लवनादिवाभूत्' इत्युक्तं, 'आशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः' इति चोक्तम् । अत्र च—'गुरुपादाम्बुजं ध्यायेद्गुरोरन्यं न भावयेत्' इत्यादिकमनुसन्धेयम् ॥ ८ ॥

कर्माधीने वपुषि कुमतिः कल्पयन्नात्मभावं दुःखे मग्नः *किमिति सुचिरं दूयते जन्तुरेषः । सर्वं त्यक्त्वा वरवरमुने सम्प्रति त्वत्प्रसादाद्दिव्यं प्राप्तुं तव पदयुगं देहि मे सुप्रभातम् ॥९॥

कर्मेति॥ हे वरवरमुने एष जन्तुः कर्माधीने कर्मोपाधिके, आगन्तुक इत्यर्थः, अनेन आरोप्याकारस्यासत्त्वमुक्तम्। वपुषि, आत्मभावमात्मत्वं आत्मरूपं पदार्थं वा कल्पयन्नारोपयन्, द्वितीयपक्षेतादात्म्येनारोपयन्नित्यर्थः; अनेन विपरीतज्ञानमुक्तम्। कुमतिः— अन्यथाज्ञानवान्, अत एव दुःखे मग्नस्सन् किं किमर्थं दूयते तप्यते, इति—अत्र मत्वेति शेषः, इति इति मत्वा, अस्य च देहीत्यत्रान्वयः, सर्वं पूर्वोक्तमन्यथाज्ञानं विपरीतज्ञानं तन्मूलकदुःखमज्ञानं तत्प्रयुक्तं परितपनं चेत्येतत्सर्वं त्यक्त्वा विसृज्य सम्प्रत्यद्यैव मे दिव्यं तव पदयुगं प्राप्तुं सुप्रभातं मे त्वत्प्रसादाद्देहि, पूर्वोक्तदुःखादित्यागपूर्वकमत्कर्तृकत्वत्पदयुगप्राप्तिफलकं कृपामात्रप्रसन्नत्वत्प्रसादैकहेतुकं मत्सम्प्रदानकं महाफलानुभवदिवसारम्भभूतसमीचीनप्रभातप्रदानं कुरुष्वेत्यर्थः । भिन्नकर्तृकाऽपि तुमुनस्साधुत्वं पूर्वमेव निर्व्यूढम्। यद्वा—एषजन्तुरित्यारभ्य दुःखे मग्नस्सन् किमिति दूयत इत्यन्वयः। स्वयमाचार्यदेशीयस्सन् स्वात्मानमेवान्यसमाधिना एष जन्तुरिति निर्दिशन्, किमिति दूयते कुतो हेतोस्तप्यत इति स्वाचार्यं प्रति निवेदयत इति सङ्गमनीयम् । यत एवं ततस्सर्वं त्यक्त्वा सर्वमपि दोषं निग्रहानावहत्वेन सङ्कल्प्य, त्वत्प्रसादात् त्वदीयात्कालुष्यविरहादनुग्रहाद्वा, दिव्यमप्राकृतं, प्राप्तं स्वरूपानुरूपं, अद्य प्राप्तमिति तान्तपाठः। सुप्रभातं—सकृद्दिवा हैवास्य भवतीत्युक्तमहादिवाप्रारम्भायमाणं तव पदयुगं मे मदर्थं देहि, पूर्वमेव जन्तुरि-

* किमर्थमपि पाठ ।

या या वृत्तिर्मनसि मम सा जायतां संस्मृतिस्ते यो यो जल्पस्स भवतु विभो नामसङ्कीर्तनं ते ॥ या या चेष्टा वपुषि भगवन् सा भवेद्वन्दनं ते सर्वं भूयाद्वरवरमुने सम्यगाराधनं ते ॥१०॥

---

त्युक्तायेति शेषः; मह्यमित्येव पर्यवसितं, 'किन्तु त्वदग्रे शरणागतानां पराभवो नाथ न तेऽनुरूपः' इतिवदियं शैलीति द्रष्टव्यम् । अत्र दिव्यं तत्पादयुग्मं, दिव्यमङ्घ्रिद्वयं, दिव्यं प्राप्तं तवपदयुगं इत्यादिना दिव्यत्वाभ्यासो गुरावमानुषत्वाभिसन्धिकृत इति बोध्यं; गुरौ हि मानुषत्वप्रतिपत्तिः प्रतिषिद्धा, यो गुरौ मानुषं भावमित्यादिना । भागवते चोक्तं "यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ । मर्त्यबुद्धिः श्रुतं तस्य सर्वं कुञ्जरशौचवत्' इति ॥ ९ ॥

यायावृत्तिरिति ॥ हे वरवरमुने मम–कर्मपरवशस्य मे, मनसि–चञ्चलत्वादिधर्मभूयिष्ठतया प्रसिद्धे चेतसि; या या वृत्तिर्जायतां–स्वस्वसामग्र्यनुगुणं यद्यज्ज्ञानं जननार्हं, अर्हे लोट्; सा स्वकारणवशादवर्जनीयोत्पत्तिकं तज्ज्ञानं ते संस्मृतिर्जायतां-स्मृतिसुखकरस्य तव समीचीनस्मृतिरूपा उत्पद्यतां, अत्र प्रार्थनायां लोट्; जायतामित्यत्र 'यद्यत्पापं प्रतिजहि जगन्नाथ नम्रस्य तन्मे' इत्यत्रेव द्विर्वचनाभाव इति द्रष्टव्यम् । विभो–स्वामिन्, मम यो यो जल्पो भवतु स्वस्वकारणवशाद्यद्यदसङ्गतमापणमुत्पत्त्यर्हं, अर्हे लोट्, अत्र जल्प इति न व्यावर्तनं किन्त्वर्थकथनं, स जल्पस्ते नामसङ्कीर्तनं भवतु–कीर्तनीयस्य तव नाम्नां समीचीनतमोच्चारणरूपमुत्पद्यतां, अत्र प्रार्थनायां लोट्; जल्प इत्यनुसारात्स इति पुंलिङ्गं, 'पर्यायेण तत्तल्लिङ्गमुपाददत इति कामचारः' इत्युक्तेः; भगवन्–परमपूज्य, प्रार्थितार्थनिर्वहणौपयिकमाहात्म्यनिधे वा; मम वपुषि–'न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इति कुर्वद्रूपे मच्छरीरे या या चेष्टा स्वस्वकारणाधीना हिताहितप्राप्तिपरिहारार्थ-

---

(1) यद्यत्सङ्गतेति च पाठः

अपगतमदमानैरन्तिमोपायनिष्ठैरधिगतपरमार्थैरर्थकामानपेक्षैः ।
निखिलजनसुहृद्भिर्निर्जितक्रोधलोभैर्वरवरमुनिभृत्यैरस्तु मे नित्य-
योगः ॥ ॥११॥

स्पन्दरूपा, भवेत् उत्पत्त्यर्हा—अर्हे लिङ्, सा ते वन्दनं भवेत्—सा चेष्टा सर्वोत्कृष्टस्य तव प्रणामरूपा उत्पद्यतां, प्रार्थनायां लिङ् । सर्वं उक्तमनुक्तञ्च कर्तृ; ते सम्यगाराधनं भूयात्—त्वद्विषयसमीचीन-प्रीणनं भूयात, आशिषि लिङ्; आराधनं हि स्मृतिकीर्तनप्रणामादि समवायः; अत्र च मम स्वैरचारस्त्वदाराधनवत्प्रीतिकरस्स्यादित्यर्थ इति व्याख्यानं संस्मृत्यादिशब्देषु लक्षणाप्रसङ्गात् स्वाधिकारविरोधात् सम्प्रदायविरोधाल्लोकक्षोभप्रसङ्गाच्चोपेक्ष्यम् । तत्स्मृत्यादिप्रार्थनकरणे त्वन्यस्मृतिविरहोऽपि पृथक्प्रार्थनीय इति गौरवमिति मत्वा चोत्पद्य-मानसर्वविधव्यापारस्यापि प्राप्तविषयविषयकत्वावच्छिन्नोत्पत्तिप्रार्थनं कृतमिति ध्येयम्॥ अत्र—'दास्याभिमानोऽनुव्रज्या श्रवणं कीर्तनं स्मृतिः" इतिवचनं, "आत्मनो ह्यतिनीचस्य योगिध्येयपदार्हताम् । कृपयैवोप-कर्तारमाचार्यं संस्मरेत्सदा। यच्च कर्म तदर्थं तद्विष्णोराराधनात्परम्॥" इत्यादिकञ्च वचनमनुसन्धेयम् ॥ यद्वा—मम मनसि या या वृत्तिर्यद्-ज्ज्ञानं सा ते संस्मृतिर्जायतां, तज्ज्ञानं त्वत्स्मृतिरूपं सदुत्पद्यतामित्यादि-रर्थः; न तु जायतामित्यादेरावृत्तिरभिधानवैरूप्यञ्चाश्रयणीयं, वाक्य-त्वसम्पत्तये परमविवक्षितकालविशेषस्य भवतीत्यस्याध्याहारेऽपि न दोषः । एवं—योजलपइत्यादिष्वपि द्रष्टव्यं; तात्पर्यार्थस्तु पूर्वं योजनायामिवानुसन्धेयः ॥१०॥

*अपगतेति॥ मे—एतावन्तं कालमसद्भिर्नित्ययोगवतो मम; अपगतौ* मदस्स्मयः मानो गर्वापरनामा उत्कृष्टजनावमानहेतुरहङ्कारश्च येषां तथो-क्तैः; अन्तिमोपाये तदीयाभिमानविषयत्वलक्षणचरमोपाये निष्ठा नितरां

स्थितिर्येषां तथोक्तैः, इयं हि निष्ठा मदमानापगमकाष्ठादशाभाविनी। अधिगतः अशेषतःप्राप्तः परमार्थस्स्वोत्कर्षावधिशून्यतदीयकैङ्कर्यरूपपुरुषार्थो यैस्तथोक्तैः, इदं चान्तिमोपायेत्युक्तोपायनिष्ठानुरूपोपेयकाष्ठालाभकीर्तनम्। 'यत्र नान्यत्पश्यति' 'स्थितेऽरविन्दे' इत्यादिन्यायमभिसन्धायाह--अर्थकामानपेक्षैरिति; उपायोपेयान्तरविमुखैरित्यर्थः। 'अहङ्कारार्थकामेषु' इत्यत्रेव अर्थकामौ उपायोपेयान्तरात्मकौ ग्राह्यौ, यद्वा--प्रसिद्धावेवार्थकामौ विवक्षितौ; निखिलजनेषु अनुकूलप्रतिकूलमध्यस्थेषु प्राणिषु, सुहृद्भिः हितैषिभिः; अर्थकामार्थं लौकिकजनानपेक्षिणामपि 'सुहृदं सर्वभूतानाम्' इत्युक्तशेषिशैल्यनुरोधिनां तेषु हितैषित्वमुच्यते, तत्र चानुकूलविवक्षा दृष्टान्तार्था। निर्जितौ क्रोधो मनःप्रज्वलनं लोभः स्थितस्य विनियोगनिरोधिकेच्छा च यैस्तथोक्तैः; अनेनावर्जनीयस्वभावभूतहितैषित्ववशाल्लौकिकोपसरणे तत्कृतेनानादरेण न क्रुध्यन्ति, स्वीयं च हितानुशासनं तेभ्यो विनियोक्तुमिच्छन्तीत्युच्यते। वरवरमुनिभृत्यैर्वाधूलवरदनारायणप्रभृतिभिः, अन्तरङ्गनिरूपकत्वप्रकर्षविवक्षया च वरवरमुनिभृत्यत्वेन निर्देशः; नित्ययोगः--पादोपधानपादरेखादीनामिवानपायसंश्लेषः, अस्तु भूयात्। अत्र च-"विशेषाद्विष्णुभक्तेषु दम्भं लोभं नृशंसताम्। क्रोधमीर्ष्यां मदं मानं साम्यं च परिवर्जयेत्॥ प्रपन्नैश्चान्यभजनाद्युक्तापायसमन्वितैः। वैष्णवो वर्जयेत्सङ्गं प्रच्युतास्ते ह्यवैष्णवाः॥ अभक्तमच्युतस्यापि नावमन्येत कश्चन॥ हितं वा बोधयेत्साधोर्दद्याद्वा किञ्चिदीप्सितम्"--इत्यादिकं, "विशिष्टपरमैकान्ती ज्ञानवैराग्यभक्तितः। तादृशैरेव कुर्वीत सहसङ्कथनादिकम्" इत्यादिकं, 'गुरौ तत्प्रियवत्सलः'-इत्यादिकञ्च भरद्वाजवचनमनुसन्धेयम्॥

अत्र च-उन्मीलत्पद्मगर्भेत्यादिषु नित्ययोग इत्यन्तेषु षट्सु श्लोकेषु स्वशिरसि स्वाचार्यकर्तृकतच्चरणप्रदानप्रार्थनं, तस्मिन् सर्वविधबन्धुत्व-

इति स्तुतिनिबन्धेन सूचितस्वमनीषितान् ॥ भृत्यान् प्रेमा-
र्द्रया दृष्ट्या सिञ्चन्तं चिन्तयामि तम् ॥ ॥१२॥

द्यध्यवसायः, तस्य सर्वदेशसर्वदेहसर्वकरणेषु सर्वदा प्रतिभासप्रयोजक भावनाप्रकर्षपर्यन्तयुक्तध्यानसन्ततिप्रार्थनं, तत्प्रसादाधीनसकलविरोध निवृत्तिप्रार्थनं, तद्विषयकसर्वविधकैङ्कर्यप्रार्थनं, तद्विवृद्धिहेतुतदीयनित्य-योगप्रार्थनं च-इति षडर्थाः प्रतिपादिताः । एते च 'मन्त्ररत्नं प्रयच्छन्तम्' इति प्रस्तुतमन्त्ररत्नतात्पर्यविषयीभूतार्था इति तदीयपदसङ्ख्याप्रत्यभिज्ञापकप्रकृतश्लोकसङ्ख्यया स्फोर्यते । तत्र पादयुग्मं दिशत्वित्यनेन चरणौशरणंप्रपद्य इत्यस्यार्थस्स्फोरितः ; प्रार्थनामतिर्हि शरणागतिः । त्वंमेबन्धुरित्यादिना च नारायणशब्दार्थ उक्तः ; माता-पितेत्युपक्रम्य सर्वंनारायण इति हि श्रूयते । अग्रेपश्चादित्यादिना च चतुर्थीलक्षिता कैङ्कर्याक्षिप्तपरमभक्तिरुक्ता । कर्माधीन इत्यादिना च नमश्शब्दविवक्षिता विरोधिनिवृत्तिरुक्ता । यायावृत्तिरित्यादिना च चतुर्थीलक्षितं कैङ्कर्यमुक्तम् । अपगतमदेत्यादिना तु अतिनिषिद्धविशेषणविशिष्टस्य कैङ्कर्यप्रतिसम्बन्धित्वतात्पर्यगर्भनारायणशब्दार्थो नमश्शब्दार्थो वा स्फोरितः । लोडाद्यन्तपदेश्च तत्राध्याहृत-स्याम्-पदार्थ उक्त इत्यनुसन्धेयम् ॥११॥

एवमाचार्यविषयस्तुतिबन्धोऽनुभूतः, अथ तज्जनितप्रेमवन्तमाचार्यं वरवरमुनिमनुभवति—इतीति ॥

इतिशब्दोऽयं पूर्वषट्श्लोक्यर्थपरामर्शी, न तु शब्दस्वरूपपरामर्शी, तत्र हि त्वंमेबन्धुरित्यादयो यायावृत्तिरित्यादिश्लोकान्ताश्चत्वारश्श्लोकाः शतकेऽपि पठिताः; आद्यन्तयोरपि हि तत्तत्साहचर्यात् कन्तिरास्तैश्च देवराजगुरुकर्तृकत्वं न्याय्यम् । यद्वा—शब्दस्वरूपपरामर्श्ये वाऽयमितिशब्दः, स्तोतॄणां अन्यसौष्ठवप्रीत्या देवराजगुरु-

अथ भृत्याननुज्ञाप्य कृत्वा चेतश्शुभाश्रये ।
शयनीयं परिष्कृत्य शयानं संस्मरामि तम् ॥१३॥

प्रणीत-श्लोकानामेव स्तुत्यर्थमुपादानसम्भवात् । स्तुतिनिबन्धेन-श्लोकषट्कात्मना स्तुतिरूपप्रबन्धेन; सूचितानि स्वमनीषितानि स्वगतानुसन्धानानि यैस्तथोक्तान् ; स्वमनीषितशब्दोऽत्र स्वगतानुसन्धानवाची, तेन षट्छ्लोक्यां परोक्षापरोक्षनिर्देशोपपत्तिः; सूचितस्वमनीषितानित्यत्र च प्रत्येकं वाक्यपरिसमाप्त्या सूचितस्वस्वमनीषितानिति लभ्यते, तेन षट्स्वपि श्लोकेषु अस्मच्छब्दस्यैकवचनान्ततोपपत्तिः; पादतद्रेखाभूतयोर्वरदनारायणरामानुजमुन्योः पादयुग्मप्रदानादिप्रार्थनानपेक्षया षण्णामेव च प्रकृतस्तुतौ अन्वय इति स्फोरणाय श्लोकानां षट्सङ्ख्याश्रयणमिति बोध्यम् । भृत्यान् क्रयविक्रयार्हत्वं स्वस्मिन् मन्यमानान् ; प्रेमार्द्रया-स्नेहार्द्रया, एतेन तदनुसंहितेषु बन्धुत्वादिषु सखित्वमेव 'बोधयन्तः परस्परम्' इत्युक्तप्रयोजनविशेषप्रयोजकतया वरवरमुनेः स्वहृदयारूढमिति ध्वन्यते ; दृष्ट्या—कटाक्षेण; सिञ्चन्तं-आर्द्रीकुर्वन्तं, दूयतेजन्तुरित्येतदपेक्षया सिञ्चन्तमित्युक्तिः, परितप्तस्य हि सेकापेक्षा; तं वरवरमुनिं, चिन्तयामि—स्मरामि; तापार्तोमरुच्छायिनमितिन्यायेन सिञ्चतश्चिन्तनं हि तापशान्तिहेतुरिति भावः । अत्र स्तोतृषु प्रेमार्द्रदृष्टिसेकोक्त्या परकृतस्तोत्राहितहर्षो व्युदस्तः । अनेन-'स्तूयमानो न हृष्येत्तु' इत्यादिशास्त्रार्थोऽनुष्ठितो भवतीति सूचितम् ॥१२॥

अथेति ॥ अथ-पूर्वोक्तदिशा रात्रौ यामद्वयातिवाहनानन्तरं; तदुक्तं काव्ये-"सरसमनससत्वान् सत्त्वोत्तरानभिनन्दयन् परिषदि परं धन्यो निन्ये मुनिः प्रहरद्वयं" इति। भृत्यान् पूर्वोक्तान् अनुज्ञाप्य,-णिजर्थस्त्वविवक्षितः, 'ज्ञानियोगे', चुरादिषु पठितं, अनुज्ञायेत्यर्थः; यद्वा शिष्येष्वपि प्रेमार्द्रयेति सूचितसखित्वाभिसन्धिनाऽनुज्ञाप्येति णिजन्तं प्रयुक्तं,

ते ह्यनुजानन्ति, तांस्तथा कृत्वेत्यर्थः । अथवा-शुभाश्रये पूर्वोक्ते चेतः कृत्वा भृत्याननुज्ञाप्येति योजनीयं; शुभाश्रयभूतेन भगवता भृत्याननुज्ञाप्येत्यर्थः, कृत्वा चेतश्शुभाश्रय इत्येतच्च पूर्वोत्तरान्वयि स्वस्थाने च तिष्ठति; तत्र पूर्वान्वयो दर्शितः, स्वस्थाने स्थितस्य च 'यामिन्यां योगकाले तु' इत्याद्युक्तयोगं कृत्वेत्यर्थः; यामिन्यां योगश्च शाण्डिल्येनोक्तः-"ईदृशः परमात्माऽयं प्रत्यगात्मा तथेदृशः । तत्सम्बन्धानुसन्धानमिति योगः प्रकीर्तितः ॥ योगो नामेन्द्रियैर्वश्यैर्बुद्धेर्ब्रह्मणि संस्थितिः॥" इति । अत्र पुष्करेक्षणादिकं शुभाश्रयविशेषणमुपसंहार्यः शुभाश्रये चेतः कृत्वा शयनीयं परिष्कृत्य शयानं तं संस्मरामीत्युत्तरत्रान्वयः । शयनीयं शयनं, परिष्कृत्य अलङ्कृत्य ; आसन्नात्पर्यङ्काच्छयनीयमर्थान्तरं, तथा च पूर्वोक्ताद्योगयोग्यासनादुत्थाय शयनं प्राप्येत्यर्थः; "ततस्सज्जीकृतं भृत्यैः शयनीयं विभूषयन्"-इति च काव्ये ॥ तथा च भृत्यप्रयाससाफल्यचिकीर्षयैव शयनीयाभ्युपगमो न तु तत्र तात्पर्यमित्ययमर्थो लभ्यते । शयनीयं परिष्वज्येति केचित् पठन्ति, स तु पाठोऽर्थस्वारस्यविरहात्काव्यगतसमानप्रकरणस्थनिर्देशवैघट्याच्चोपेक्ष्यः । शुभाश्रये चेतसः करणं शयानत्वञ्च समकाल एवेति लब्धम् । तथा च यतिधर्मसमुच्चये शौनकः-"शरणं न कुर्यात् न कारयेत्, कृतं प्रविशेत्, अथ ब्रह्मोपासीत, तच्चित्त एव शयीत" इति । संस्मरामि-अनुज्ञाप्येति बहिर्गमनसूचितेन दर्शनानवसरेण स्मरणमेव प्राप्तकालमिति श्रीमान्सुखसुप्त इत्युक्तदिशा तात्कालिकशोभातिशयविशिष्टतया स्मरामीत्यर्थः ॥१३॥

निगमे दिनचर्यानुसन्धानफलमाह—दिनचर्येति ॥ इमां-परेद्युः पश्चिमे याम इत्यारभ्य शयानं संस्मरामितिमित्यन्तसन्दर्भरूपां तादृशसन्दर्भप्रतिपादितां वा; दिव्यां दिविभवां, अस्पृष्टसंसारदोषगन्धायां

दिनचर्यामिमां दिव्यां रम्यजामातृयोगिनः ।
भक्त्या नित्यमनुध्यायन् प्राप्नोति परमं पदम् ॥१४॥

इति

श्रीदेवराजगुरुविरचिता
उत्तरदिनचर्या
समाप्ता.

—

श्रीः



नित्यविभूतावेव सम्भावितामत्र प्रायेण दुर्लभाम्। अस्याश्च दौर्लभ्यं भरद्वाजपरिशिष्टेऽभिहितं—"सुसूक्ष्मत्वाद्दुरापत्वान्महत्त्वाद्गौरवादपि । मयाऽयं परमो धर्मः प्रोक्तस्सिद्ध्यै पुनःपुनः॥" इति; "परमैकान्तिनां धर्मः कृते पूर्णः प्रवर्तते । क्षीयमाणः क्रमेणायं कलौ स्थास्यति वा न वा। नानाकामान्वितज्ञाना नानादैवतयाजिनः । नरा भगवदैकान्त्यं न स्थास्यन्ति कलौ युगे । परं भागवतं वर्त्म दृष्ट्वापि कलिमोहिताः। प्रभवन्ति न विद्वांसस्त्यक्तुं पूर्वानुवर्तिनीम् । भविष्यन्ति कलौ केचित् क्वचिदेकान्तिनो हरौ। मोहयिष्यन्ति च परे कुतर्कैस्तान् कुदृष्टयः॥" इति च। यद्वा-'दिव्यां दिव्यशास्त्रगणेषु च' 'दिव्यागममयापि वा' इत्युक्त-दिव्यशास्त्रसिद्धत्वात् दिव्यत्वं विवक्षितं; दिगादित्वाद्यत्प्रत्ययः। रम्य-जामातृयोगिनः—निष्कृष्टसत्त्वैकनिष्ठस्य भगवतो वरवरमुनेः; दिनचर्या-अहोरात्रक्रियाप्रतिपादककृतिं, वासवदत्तादिशब्दवदुपचारात् दिनचर्या-शब्दः तत्प्रतिपादकग्रन्थे वर्तते; अहोरात्रक्रियायां वा; दिनादिशब्दानां हि रात्र्यादिशब्दासमभिव्याहृतानामहोरात्रपरत्वं रात्र्यादिशब्दानां च दिना-दिशब्दासमभिव्याहृतानामहोरात्रपरत्वं 'षडहैर्मासा भवन्ति' 'तिस्रो रात्रीर्न दुहन्ति' इत्यादिषु दृष्टम्। यद्वा-अहोरात्रकर्तव्येषु अभिगमनादिषु

पञ्चसु अहःकर्तव्यानां भूयस्त्वादिनचर्येति भूयसा व्यपदेशो मह्यग्रामादिवदिति द्रष्टव्यम्; आह्निकादिशब्देऽप्ययं न्यायोऽनुसन्धेयः; । नित्यं प्रतिदिनं, भक्त्या–आराध्ये भगवति आराधके वरवरमुनौ आराधनरूपे पाञ्चकालिककर्मणि च गौरव्यप्रतिपत्तिसहकृतनिरतिशयप्रेम्णा; अनुध्यायन्-अनवरतमनुसन्दधानः पुरुषः, यावज्जीवं होतव्यस्याग्निहोत्रस्य सायंप्रातर्व्यवस्थावद्व्यवस्थानिरासाय अनुध्यायन्नित्युक्तं; अत्र लक्षणहेत्वोरिति शत्रादेशः । ईदृशादिनचर्यानुध्यानं हि 'यद्यदाचरति श्रेष्ठः' इत्यादिन्यायेन शक्तानां पाञ्चकालिकानुष्ठाननिष्ठापर्यवसानमुखेन सिद्धोपायाधिकारं पूरयत् फलसिद्धिप्रयोजकं भवति, अशक्तानां त्वनुष्ठानकार्यकरं भवति। यद्यपि-पाञ्चकालिककर्मणः स्वतन्त्रोपायत्वमवगम्यते-यथा "अच्छिद्रपञ्चकालज्ञाः पञ्चयज्ञविचक्षणाः । पूर्णे वर्षशते धीराः प्राप्नुवन्ति यथाऽऽज्ञया॥" इति लक्ष्मीतन्त्रेऽभिहितम् । तथा शाण्डिल्योऽप्याह—"सर्वधर्मान् समुत्सृज्य पाञ्चकाल्यमनुव्रताः । व्यामिश्रयोगनिर्मुक्ता गच्छन्ति पुरुषोत्तमम्॥" इति । तथाऽपि--भरद्वाजादिभिस्सिद्धोपायनिष्ठेन फलरूपतयैव तेषां कर्तव्यत्वमुक्तम्--"अथ स्वधर्मनिरतः प्राज्ञो भक्तस्सुलक्षणः । सत्सेवाभिरतो ह्येव प्रपन्नासिद्धिमाप्नुयात्॥" इत्युपक्रम्य प्रपन्नधर्मानुक्त्वा, "कृत्वाभिगमनं पूर्वमुपादाय च सम्पदः । इष्ट्वाधीत्य च युञ्जानो भोगैः कालं विनोदयेत्" इत्यादिना। अत्र हि विनोदनोक्तिः फलरूपत्वाभिप्रायेण । पराशरश्चाह–"उपायभावात्सन्त्यज्य स्वकर्मादिचतुष्टयम् । कर्म कुर्यादसक्तस्सन् सन्तुष्टये परमात्मनः" इति । अत्र तच्चकुर्यादित्यनुक्त्वा कर्मकुर्यादित्युक्तिः क्रियमाणकर्मणस्त्यक्तेभ्यः कर्मान्तरत्वाभिप्रायेण । तदुक्तं भरद्वाजपरिशिष्टे-'बाह्यस्सदसतां नास्ति भेदः प्रायेण कर्मसु । सङ्कल्पादेव सिद्धानि स हेतुर्बन्धमोक्षयोः' इति । अतो नोपायान्तरान्वयप्रसङ्गः, विनियोग-

पृथक्त्वन्यायेनापि नोपायान्तरान्वयप्रसङ्ग इति ध्येयम् । परमं पदं प्राप्नोति-'सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु'–इत्यादिना सर्वोत्कृष्टत्वेन प्रतिपादितं तद्विष्णोः परमं पदमित्युक्तं ; पर्वत्रयात्मकप्राप्यसिद्धेर्निर्विघ्नदेशभूतस्थानं, प्राप्नोति-साध्यवृद्धिलक्षणप्रकर्षेणाप्नोति । अत्र च-प्राप्नोति परमं पदमित्यनेन 'अथ वृत्तिमिमां शश्वत्कुर्वाणो विगतव्यथः । विसृज्य देहं प्राप्नोति तद्विष्णोः परमं पदम्'–इति भरद्वाजवचनं प्रत्यभिज्ञाप्यते । भक्त्या दिनचर्यामनुध्यायन्नित्यत्र च "यश्चेमां संहितां पुण्यां शृणुयाच्छ्रावयेत वा । स मुक्तस्सर्वपापेभ्यस्सर्वान्कामान् समश्नुते'–इति भारद्वाजवचनं, 'वृत्तिं सन्तोऽनुभूयेमामनुरूपामिहात्मनः । परत्र चानुमोदन्ते परमेण विपश्चिता'–इति भरद्वाजपरिशिष्टवचनञ्चानुसन्धेयम् । वचनेषु च–तद्विष्णोः परमं पदमित्यनेन परमे व्योमन्नित्यस्य, सर्वान्कामान्समश्नुत इत्यनेन सोऽश्नुते सर्वान्कामानित्यस्य, परमेणविपश्चितेत्यनेन सहब्रह्मणाविपश्चितेत्यस्यार्थश्चोपबृंहित इति रमणीयम् ॥१४॥

स्वयं प्रमाणेऽप्याचार्ये रम्यजामातृयोगिनि ।
स्मृतिप्रपञ्चनं तज्ज्ञास्तुष्यन्त्विति मया कृतम् ॥

इति
श्रीवाधूलवीरराघवसूरिविरचितायां
दिनचर्याव्याख्यायां सदाचारदीपिकाख्यायां
उत्तरदिनचर्याविभागः

समाप्ता चेयं दिनचर्याव्याख्या

श्रीः.

दिनचर्याशोधनपत्रम्.

| पृ. प. | अशुद्धम्. | शुद्धम्. |
|---|---|---|
| २— ४ | चम्पु | चम्पू |
| ,,—२० | स्तोमि | स्तौमि |
| ३—२२ | परमेकान्तौ | परमैकान्ती |
| ५— ४ | आयात | आयान्त |
| ९— ५ | विजानतो | विजानता |
| ,,—१२ | ऊपश्लिष्टं | उपश्लिष्टं |
| ११— ९ | पाराशरो | पराशरो |
| १२—२० | रोमञ्चो | रोमाञ्चो |
| १३—२० | सन्तोपात | सन्तोपात् |
| १७—१९ | ग्रन्थस्तरसात् | ग्रन्थस्वारस्यात् |
| १९—२४ | स्वरू रूप | स्वरूपरूप |
| २०— ५ | प्रपद्येतं | प्रपद्येत |
| २०—२२ | अखिलस्येश्वरा | अखिलस्येश्वरी |
| २३—११ | .... | प्रमाणान्युपोद्धृत. |
| २३—१३ | वनसन | वनपण |
| २४—१९ | अपीति | अपैति |
| ,,—२२ | वननममभि | वननमभि |
| २६—२० | कामाय | काम्या च |
| २७— ६ | यात्रा | पात्रा |
| ३३—११ | विहगनृपम | विहगऋपम |
| ३४— ९ | अनग्निग्निनिकेन | अनग्निरनिकेत |
| ३९—२० | प्रात्रे | पात्रे |
| ,,—२१ | निशेपानुरुा | विशेषानुरत्या |

| | | |
|---|---|---|
| ४६—१२ | मोयत्व | भोग्यत्वं |
| ,, —१७ | रागण | रागेण |
| ,, —२२ | कामाददोष | कामादिदोष |
| ४७— ८ | रूपामिति | रूपामिति ; |
| ४८— २ | कूरादि | कूराधि |
| ४९—१४ | कूरादि | कूराधि |
| ,, —१९ | मुखमादियेषां | मुखमादिर्येषां |
| ५०—११ | भाववन्ध | भावबन्ध |
| ,, —१७ | करणान्तं | करणान्तरं |
| ५१—२५ | चति | चेति |
| ५२— ५ | सहिष्णु | सहिष्णु |
| ५३— ४ | .... | पदाब्ज इत्यत्र भवदीयानां पदाब्जेष्वित्यर्थ इत्यपि वदन्ति |
| ५३—१२ | | अहिंसासत्य |
| ५४— ४ | | तेनचोद्देश्यतावच्छेदकव्याप- [करत्वं |
| ,, — ५ | | प्रवक्त |
| ,, —१६ | | स्मर्तुं |
| ,, —२० | | न्याय्यं |
| ,, —२२ | साधुत्वं | साधुत्वं |
| ५५— ६ | | तदधिकारभू |
| ,, —१८ | गोष्ठि | गोष्ठी |
| ,, —२१ | | भवति |
| ,, —२५ | | योऽसौ |
| ५६— १ | | क्रियया |
| ,, —११ | | सूक्तिष्वनुसन्धेयम् |
| ,, —२४ | | भगवदपचारत्व |

| | | |
|---|---|---|
| ३६—२५ | .... | विभान्नकोपाश्रयो |
| ५८—२२ | बंहिश्च | बहिश्च |
| ५९— ६ | भवाामि | भवामि |
| ,, —१५ | व्याख्यानादन्त | व्याख्यानात्, अन्त |
| ६०—१० | नक्षत्र | नक्षत्र |
| ,, —१८ | कर्तुं | हर्तुं |
| ,, —२१ | पार्पस्य | पापस्य |
| ६१—२४ | शुद्ध | शुद्ध |
| ६२—१४ | आत्तदोप | आत्मदोप |
| ,, —२० | ,, | ,, |
| ६३—२० | कार्यकारणो | कार्यकरणो |
| ,, ,, | शक्तिमुत्पा | शक्तिमुपपा |
| ,, —२४ | प्रकाश | प्रकार |
| ६६— ७ | नितरणौपाधिक | वितरणौपायिक |
| ,, —१० | दयायाः | दयायात |
| ,, — ८ | उपात्त | उपान्त्य |
| ७१— ६ | नाकाङ्क्षं | साकाङ्क्षं |
| ,, —२२ | दक्षाद् | दक्षादि |
| ७७— ४ | शाशिता | शासिता |
| ७८—२१ | पितुवत् | पितृवत् |
| ,, —२३ | इत्यादि कं | इत्यादिकं |
| ८४—२५ | परामर्श्ये वाय | परामर्श्येवाय |
| ८५—१५ | आर्द्रा | आर्द्रा |
| ८६—२० | सुचितेन | सूचितेन |
| ८७—२२ | महारोत्र | महोरात्र |